# त्रितलावच्छेदकतावादः



दार्शनिकप्रवर-

**पण्डित श्रीशशिनाथ झा**

-विरचितः

मिथिलाविद्यापीठप्रधानेन

प्रकाशतां नीतः

THE GOVERNMENT OF BIHAR established the Mithila Institute of Post-Graduate Studies and Research in Sanskrit Learning at Darbhanga in 1951 with the object, ***inter-alia,*** to promote advanced studies and research in Sanskrit Learning, to bring together the traditional Pandits with their profound learning and the modern scholars with their technique of research and investigations, to publish works of permanent value to scholars. This Institute is one of the five others planned by this Government as a token of their homage to the tradition of learning and scholarship for which ancient Bihar was noted. Apart from the Mithila Institute, three others have been established and have been doing useful work during the last three or four years—Nalanda Institute of Research & Post-Graduate Studies in Buddhist Learning and Pali at Nalanda, K. P. Jaisawal Research Institute at Patna, and the Bihar Rashtra Bhasha Parishad for research and advanced studies in Hindi at Patna. In the establishment of the Mithila Institute the State Government received a generous donation from the Maharajadhiraja of Darbhanga for construction of the building on a plot of land also donated by him.

2. As part of this programme of rehabilitating and re-orientating ancient learning and scholarship, the editing and publication of this volume has been undertaken with the co-operation of scholars in Bihar and outside. The Government of Bihar hope to continue to sponsor such projects and trust that this humble service to the world of scholarship and learning would bear fruit in the fulness of time.

# भूमिका

विदितमेवैतद्विश्वेषां विदुषाम् यदुत अवच्छेदकतामुपादायैव नव्यतार्किकाणां सर्वे व्यवहाराः, व्याप्तिवादोऽपि नवीनानामवच्छेदकतामवलम्ब्यैव बहुविस्तृतो जातः, कथमन्यथा अविनाभावो वा अनौपाधिकसम्बन्धो वा नियमो वा व्याप्तिरित्येतावन्मात्रणव,प्राचां ,व्याप्तिव्यवहारे सुदृढनिरूढे तत्र कल्पितानेकदोषप्रहारेण प्राचीनोक्तिं विसंस्थुलीकृत्याव्यभिचारप्रभेद-साध्याभाववदवृत्तित्वादि-लक्षणात्मिका हेतुव्यापकसाध्यसामानाधिकरण्यादिरूपा वा न्यूनवारकेतरवारकावच्छेदकतापर्याप्तिसंघटिता व्याप्तिरुपादीयते। यस्यां दोषव्यपोहाय सूक्ष्ममतिभिर्नव्यैर्बहुविधानि विस्तृतानि विवेचनानि पूर्वपक्षोत्तरपक्षरचितस्वरूपाणि समन्ततोऽवच्छेदकतामाश्रित्यैवोपनिबद्धानि। निरन्तरं तदभ्यासैकपरायणयोर्वादिप्रतिवादिनोर्मल्लप्रतिमल्लन्यायेन शास्त्रार्थसंग्रामोऽपि विद्वत्सभायां जयपराजयफलकोऽवच्छेदकतापरम्परोक्तिसुशोभित एवोज्जृम्भते। कार्यकारणभावप्रतिबध्यप्रतिबन्धकभावसंकथाऽपि नान्तरेणावच्छेदकतां सिद्धिपथमुपयाति। जातिसिद्धिरपि कारणतावच्छेदकतया कार्यतावच्छेदकतया वा भवन्ती पुरस्करोत्येवावच्छेदकताम्। सेयमवच्छेदकता देशविधया कालविधया धर्मविधया संसर्गविधया च विभिन्ना प्रतीयमाना प्रतिनियतव्यवहारार्थमाद्रियमाणा न वाङ्मात्रेणापलपितुं शक्या। अत एव च प्रकारतादितो विलक्षणा सा। नहि प्रकारत्वादीनां देशकालादिविधया वैलक्षण्यमनुभूयते। अवच्छेदकता हि प्रकारताविशेष्यताप्रतियोगितानुयोगितादिनिरूपिता भवति, अवच्छेदकतानिरूपिताऽपि भवति। प्रकारतादयस्तु न प्रकारतादिनिरूपिताः, किन्तु प्रतिनियताभिर्विशेष्यतादिभिरवच्छेदकतया च निरूपिताः। अतएव यथाऽवच्छेदकतानिरूपितावच्छेदकतानिरूपितावच्छेदकतेत्येवं क्रमेणावच्छेदकताधारा प्रतीतिपथमवतरति, न तथा प्रकारतानिरूपितप्रकारतेति विशेष्यतानिरूपितविशेष्यतेति प्रतियोगितानिरूपितप्रतियोगितेत्येवंक्रमेण प्रकारतादिधाराऽनुभूयते। न तथा संभवत्यपि, प्रकारतात्वेन प्रकारतात्वेन निरूप्यनिरूपकभावस्याभावात्। एवं विशेष्यतात्वेन विशेष्यतात्वेन निरूप्यनिरूपकभावादेरभावात्। एवं कार्यताकारणताप्रतियोगितानुयोगितादिनिरूपिताऽवच्छेदकता बाह्यवस्तुस्वरूपा ज्ञानाद्यभावकालेऽपि वर्त्तते, प्रकारतादिनिरूपिता तु सा ज्ञानादिसमानकालीनेत्येवं द्विविधा, प्रकारतादयस्तु ज्ञानादिनिरूपिता एव ज्ञानादिसमानकालीना एव च। एवं प्रतियोगित्वानुयोगित्वादयो न ज्ञानादि-

निरूपिताः, नापि ज्ञानादिसमानकालीनाः, किन्तु संसर्गाभावादिनिरूपिताः प्रतियो-ग्यादिसमानकालीना एव भवन्ति, तत्रापि संसर्गनिरूपिता प्रतियोगिता न सम्बन्धा-वच्छिन्ना, अभावनिरूपिता तु सा द्विविधा सम्बन्धावच्छिन्ना तदनवच्छिन्ना च। आद्याऽत्यन्ताभावनिरूपिताऽन्योन्याभावनिरूपिता च। अन्त्या ध्वंसप्रागभावनिरू-पिता, सा सामान्यधर्मावच्छिन्नाऽपि न भवति। यत्तु भासमानसंसर्गप्रतियोगित्वा-नुयोगित्वे प्रकारत्वविशेष्यत्वे इति मतं, तन्न समीचीनं, संसर्गप्रतियोगित्वस्य सम्बन्धा-नवच्छिन्नत्वात्प्रकारत्वस्य च सम्बन्धावच्छिन्नत्वात्तयोरैक्यासम्भवात्। यदपि प्रकारत्वादीनां साक्षाज्ज्ञाननिरूप्यत्वम् अवच्छेदकतायाश्च परम्परया तथात्वमिति तयोर्वैलक्षण्यम्, तन्न मनोरमम्। अवच्छेदकताया नानाविधत्वेन कस्याश्चित्तस्याः साक्षाज्ज्ञानानिरूपितत्वेऽपि कस्याश्चित्पुनरसाक्षाज्ज्ञाननिरूपितत्वस्यापि भावात्। यथा शरीरे ज्ञानादिकमबच्छेदकतया वर्त्तते सावच्छेदकता साक्षादेव ज्ञाननिरूपितेति। यद्यपि ज्ञाननिरूपितविषयतायाश्चत्वारो भेदाः—तत्र प्रकारताविशेष्यतासंसर्गत्वाख्या स्तिस्रो विषयताः सविकल्पकनिरूपिताः, तदन्यातु निर्विकल्पकनिरूपितविषयता धर्मविधयाऽवच्छेदकता तु प्रकारतारूपैवेति, तदपि न समीचीनम्। उपलक्षितवैशिष्ट्या-वगाहि-विशिष्टवैशिष्ट्यावगाहिबुद्धयोर्वैलक्षण्याय उपलक्षकधर्मे प्रकारत्वस्य विशेषण-धर्मेऽवच्छेदकत्वस्य ततो विलक्षणस्य स्वीकारात्। यद्यपि सावच्छिन्नत्वनिर-वच्छिन्नत्वाभ्यामवच्छेदकतायाः प्रकारतया सममस्ति समानधर्मता। तथाहि अनुल्लि-ख्यमानजात्यखण्डोपाधिनिष्ठास्तु अवच्छेदकताप्रकारतादयो निरवच्छिन्नाः। स्वरूपतो भासमानो जातिभिन्नो धर्मोऽखण्डोपाधिः, नियमेन किञ्चिद्रूपेण भासमानो धर्मः सखण्डोपाधिः, जगदीशमते जातिभिन्नत्वे सति विशेष्यतानात्मकप्रकारताशालिधर्मत्व-मखण्डोपाधित्वम्। गदाधरमते जातिभिन्नत्वे सति विशेष्यत्वानवच्छेद्यप्रकारता-शालिधर्मत्वमखण्डोपाधित्वम्। विशेष्यतानात्मकप्रकारताशून्यधर्मत्वं जगदीशमते सखण्डोपाधित्वम्। गदाधरमते विशेष्यत्वानवच्छेद्यप्रकारताशून्यधर्मत्वं सखण्डो-पाधित्वम्। तथापि अवच्छेदकत्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकता-निरूपितेत्येवं क्रमेण शाब्दबोधाकारो यथा त्रितलावच्छेदकतासङ्घटितमूर्तिर्भवति नैवं तथा प्रकारत्वनिष्ठप्रकारत्वनिष्ठप्रकारत्वनिष्ठप्रकारतानिरूपितेत्येवं क्रमेण शाब्द-बोधाकारस्त्रितलप्रकारतासङ्घटितमूर्त्तिर्भवति, नवा विशेष्यत्वनिष्ठविशेष्यत्वनिष्ठ-विशेष्यत्वनिष्ठविशेष्यतानिरूपितेत्येवं क्रमेण शाब्दबोधाकारस्त्रितलविशेष्यतासङ्घ-टितमूर्तिर्भवतीति त्रितलावच्छेदकतावाद एवादृतः शास्त्रार्थरसिकेषु छात्रेषूपकाराधा-

नाय तार्किकैः। प्रकारत्वनिष्ठप्रकारत्वनिष्ठप्रकारत्वनिष्ठप्रकारता–विशेष्यत्वनिष्ठविशेष्य-त्वनिष्ठविशेष्यत्वनिष्ठविशेष्यतादयश्च न सन्त्येवेति तु तार्किकपरिषदि न वाच्यं विज्ञैः। अवच्छेदकत्वप्रकारत्वविशेष्यत्वप्रतियोगित्वादीनां केवलान्वयित्वेन नैयायिकैरुपगमात्। तत्र यस्यावच्छेदकत्वं व्यवस्थापनीयं तस्य प्रतियोग्यादिविशेषणतयोपादानत एवा-वच्छेदकत्वं सुव्यवस्थितं भवति। प्रकारत्वे प्रकारत्वमित्थं—प्रमेयत्वं प्रकार इति बुद्धौ प्रमेयत्वं विशेष्यं प्रकारत्वं प्रकार इति प्रकारत्वनिष्ठा प्रकारता भवति। प्रमेयत्वं प्रकारत्व-निष्ठप्रकारत्ववदिति बुद्धौ प्रमेयत्वं विशेष्यं प्रकारत्वनिष्ठप्रकारता प्रकार इति प्रकारत्व-निष्ठप्रकारत्वनिष्ठप्रकारता भवतीत्येवं दिशा प्रकारताधारा संभवति। एवं विशेष्यत्वं प्रमेयमित्यत्र विशेष्यत्वं विशेष्यं प्रमेयत्वं प्रकार इति विशेष्यत्वनिष्ठविशेष्यता भवति, विशेष्यत्वविशेष्यत्वं प्रमेयमित्यत्र विशेष्यत्वविशेष्यत्वं विशेष्यं प्रमेयत्वं प्रकार इति विशेष्यत्वनिष्ठविशेष्यत्वनिष्ठविशेष्यता भवतीत्यादिदिशा विशेष्यताधाराऽपि संभव-तीति। यद्यपि त्रितलावच्छेदकताद्यवगमसौलभ्याय तत्तद्विषयताप्राधान्यमाश्रित्या-वान्तरबोधप्रकारा ग्रन्थेऽस्मिन् दर्शिताः, यतः सूक्ष्ममतीनां स्वत एवाक्लेशेनावच्छेद-कत्वनिष्ठावच्छेदकत्वनिष्ठेत्याद्युक्तार्थावगतिर्भविष्यत्येव। तथापि मन्दमतीनां कथ-मित्थमित्याकांक्षानिवृत्तयेऽपि यत्र तस्य साक्षादवच्छेदकत्वं तस्य तन्निष्ठावच्छेदकता-निरूपितत्वेन निवेशः, यत्र यस्यावच्छेदकतावच्छेदकत्वं तस्य तन्निष्ठावच्छेदकत्व-निष्ठावच्छेदकतानिरूपितत्वेन निवेशः, एवं दिशा निवेशः कुतोऽस्ति, तत्र न किञ्चि-द्वक्तव्यमवशिष्यते। त्रितलावच्छेदकतावाद एतादृशोऽन्यादृशो वा गुरुपरम्परागतः स्व-स्वशिष्यपरम्परासु पूर्वमप्यासीदेव, किन्तु शास्त्रार्थे वाग्विलासेऽत्यन्तोत्कर्षाधानहेतु-तयाऽभिमन्यमानत्वाद्धृदयान्तरेव शास्त्रार्थरसिकैः स्ववैशिष्ट्यख्यातये सुरक्षितोऽ-भवत्, मतु पुस्तकारूढः प्रायः पण्डितप्रकाण्डैः कृतः, (गुणकीली) काष्ठान्तरगूढकील-वदमुमहमेव जानामि नान्य इत्येवं भावितो विनष्टप्राय एव। यश्चेदानीं वैयाकरणप्रवर-वाणीश - झा–प्रभृतिनिर्मिते शब्दखण्डविचारे तात्पर्यज्ञानजन्यवृत्तिविशेषजन्याकांक्षा-घटकपदविशेषज्ञानजन्योपस्थितिनिष्ठशाब्दबोधनिरूपितकारणतावच्छेदकतापरम्परा तात्पर्यविशेषस्वरूपसन्निविष्टविषयत्वतात्पर्यज्ञानतज्जन्यत्ववृत्तिविशेषतज्जन्यत्वादौ स्थि-ता त्रितलावच्छेदकताशब्देन व्यपदिश्यत इति प्रकारः, सोऽपि कथञ्चिदुपादेय एव। यतः पुस्तकारूढस्य तस्य कियत्कालं त्रितलावच्छेदकतावादजीवनत्वं सम्भा-व्यते। नैतावन्मात्रेण प्रक्रियाभेदाश्रयणेन निर्मितोऽयं त्रितलावच्छेदकतावादो गतार्थ-यितुं शक्यते।

एतत्कर्त्रा झोपाह्व - शशिनाथेन स्वपरिचय एतद्ग्रन्थ एवान्ते स्पष्टीकृतः,

किन्त्वेतस्य निर्माणे प्रोत्साहितः स विद्वद्वृन्दमुकुटेन दरभङ्गास्थ-मिथिलासंस्कृतविद्या-पीठोन्नतिकार्यपरायणेन सुपरीक्षोत्तीर्णतोपलब्ध-व्याकरणाचार्यादि-विरुदालङ्कृता-नल्पविद्वत्समष्ट्याध्यापननिपुणेन निरन्तरानल्पदर्शनग्रन्थाभ्यसनोपार्जिततत्तद्दर्शनतत्व-चिन्तामणिना धीधनेन उमेशमिश्र-महोदयेन। सुकरश्चैतद्ग्रन्थोक्तत्रितलावच्छेदक-तावबोधः, यथा देवदत्तस्यैकस्यातिवृद्धप्रपितामहचैत्रापेक्षया स्वपुत्र-पुत्र-पुत्र-पुत्र-पुत्रत्व-लक्षणमतिवृद्धप्रपौत्रत्वं, वृद्धप्रपितामह-मैत्रापेक्षया स्वपुत्र-पुत्र पुत्र-पुत्रत्वलक्षणं वृद्धप्रपौ-त्रत्वं, प्रपितामह-विष्णुदत्तापेक्षया स्वपुत्र-पुत्र-पुत्रत्वलक्षणं प्रपौत्रत्वं, पितामह-भवदत्ता-पेक्षया पुत्र-पुत्रत्वलक्षणं पौत्रत्वं, पितृ-रघुदेवापेक्षया पुत्रत्वम्। यथा वा तत्रैव चैत्रस्य देवदत्तापेक्षया पितृपितृ-पितृ-पितृ-पितृत्वलक्षणमतिवृद्धप्रपितामहत्वं, रघुदेवापेक्षया पितृ-पितृ-पितृ-पितृत्वलक्षणं वृद्धप्रपितामहत्वं, भवदत्तापेक्षया पितृ-पितृ-पितृत्वलक्षणं प्रपितामहत्वं, विष्णुदत्तापेक्षया पितृ-पितृत्वलक्षणं पितामहत्वं, मैत्रापेक्षया पितृत्वं। तथा तन्न्यायेन त्रितलावच्छेदकतायोजनेति।

इदं पुनरिहावधेयम्—अवच्छेदकतामवलम्ब्यैवायं ग्रन्थ आविर्भूतः, अवच्छेदक-तैव तु का, अवच्छेदकताऽखण्डोपाधिविशेष एवेति तु न वाच्यम्। यतः, यः खलु जातिर्न, जातिबद्धाखण्डः, अर्थाज्जातिर्यथाऽनेकपदार्थघटितशरीरा न, किन्तु सकल-घटानुगतो धर्मविशेष एव सनिरूपकभिन्नो घटत्वं, तथा कश्चिद्धर्मोऽखण्ड-शरीरः सनिरूपकभिन्नः सोऽखण्डोपाधिः, अवच्छेदकता तु सनिरूपिकैव, न तु सनिरूपकभिन्नेति नाखण्डोपाधिः। सनिरूपकत्वं तस्या इत्थम्—घटत्व-मित्युक्तौ किं घटत्वमिति घटत्वस्वरूपमात्रविषयिणी जिज्ञासा भवति, न तु कस्य घटत्वमित्याकाङ्क्षा समुल्लसति, घटत्वमवच्छेदकमित्युक्तौ तु कस्यावच्छेदक-मित्याकाङ्क्षा जायते, सा च प्रतियोगितायाः प्रकारताया विशेष्यताया वाऽवच्छेदक-मित्युक्तावुपशाम्यति, यद्यस्य कस्येत्याकाङ्क्षानिवर्त्तकं तत्तस्य निरूपकं, यद्यन्निवर्त्तनी-याकाङ्क्षोत्थापकं तत्तन्निरूप्यमिति, प्रतियोगितादेरुक्ताकाङ्क्षानिवर्त्तकत्वादवच्छे-कतानिरूपकत्वं, प्रतियोगितादिनिवर्त्तनीयनिरुक्ताकाङ्क्षोत्थापकत्वादवच्छेदकत्वस्य प्रतियोगितादिनिरूपितत्वम्। एवं देवदत्त इत्युक्तौ को देवदत्त इत्याकाङ्क्षैवोदेति, न तु कस्येति, देवदत्तो गुरुः पिता पुत्रः स्वामीत्याद्युक्तौ तु कस्य गुरुः कस्य पितेत्याद्या-काङ्क्षा समुल्लसति, तन्निवृत्तिश्च चैत्रस्य गुरुरित्यादितो भवतीति गुरुत्वादिकं सनिरू-पकम्। एवं घटः प्रतियोगीत्यादौ कस्य प्रतियोगीत्याद्याकाङ्क्षासमुल्लासात्प्रतियोगित्वा-दीनामपि सनिरूपकत्वम्। भवतु सनिरूपिका सा, अनेकपदार्थघटितशरीरा तु न

भवति। तावताऽपि घटत्ववदखण्डशरीरत्वादखण्डोपाधिर्भविष्यति, तदपि न। घटत्वे यद्घटत्वत्वं तद्घटेतरासमवेतत्वे सति सकलघटसमवेतत्वरूपमनेकपदार्थघटित-शरीरत्वात्सखण्डोपाधिरूपम्, तद्वत्स्वरूपमेव यदि घटत्वं तदा तदुल्लिख्यमानमनुल्लि-ख्यमानं वा भवतु, उभयथाऽपि तत्प्रतीयमानं निरुक्तघटत्वत्ववदेव प्रतीयेत, न तु स्व-रूपतः क्वचिदपि भासेत। तथा च घटवद्भूतलं, घटोऽयं, घटो नास्तीत्यादिप्रतीतिमात्रे घटत्वभानार्थं घटत्वत्वभानमावश्यकं, घटत्वत्वञ्चोक्तस्वरूपं घटादिविशेषणघटित-मूर्तिकं घटादिविशेषणज्ञानजन्यज्ञान एवं भासते, घटज्ञानञ्च घटत्वज्ञानमन्तरेण न सम्भवति, विशिष्टबुद्धिं प्रति विशेषणज्ञानस्य कारणत्वात्, घटत्वज्ञानञ्च घटत्वत्वज्ञान-मन्तरेण न सम्भवतीत्यनवस्थया घटज्ञानमेवावलुप्येत, निर्विकल्पघटत्वज्ञानस्यासम्भवेन निरुक्तज्ञानधाराविश्रान्त्यसम्भवात्, अतोऽखण्डशरीरं घटत्वं धर्मविशेषः, तत्र निरुक्तस्वरूपं घटत्वत्वं सखण्डोपाधिस्वरूपमिति। अवच्छेदकतायामवच्छेदकतात्वं तु नावच्छेदकेतरावृत्तित्वे सति सकलावच्छेदकवृत्तित्वम्, अवच्छेदकत्वस्य केवलान्व-यित्वेन सकलस्य वस्तुनोऽवच्छेदकरूपतयाऽवच्छेदकेतरस्याप्रसिद्धत्वेनावच्छेदकेतर-वृत्तित्वाभावरूपस्यावच्छेदकेतरावृत्तित्वस्याप्यप्रसिद्धेः। एवं प्रमेयादिनिष्ठावच्छेदक-तादेः कतिपयस्यैव सकलावच्छेदकवृत्तित्वेन घटत्वादिनिष्ठावच्छेदकत्वानां सकला-वच्छेदकवृत्तित्वस्याभावेन तदंशस्याव्याप्तत्वाच्च। तस्मात्सकलावच्छेदकतासु वर्त्तमान-मतिरिक्तधर्मविशेषस्वरूपमवच्छेदकतात्वमखण्डोपाधिरेव, तद्वद्रूपमवच्छेदकत्वमनेक-पदार्थघटितशरीरं सखण्डोपाधिरेव, अत एवावच्छेदकताया न्यूनवारकेतरवारक-पर्याप्तिनिवेशे अवच्छेदकत्वनिष्ठावच्छेदकताया अवच्छेदकतात्वनिष्ठावच्छेदकता-निरूपितावच्छेदकत्वनिष्ठावच्छेदकतात्वेनैव निवेशो नव्यनैयायिकैः क्रियते। एवमेव प्रतियोगित्वादीनां केवलान्वयित्वेन प्रतियोगीतराद्यप्रसिद्ध्या, प्रमेयादिनिष्ठप्रतियोगि-त्वादीनां सकलप्रतियोग्यादिवृत्तित्वेऽपि घटाभावादिनिरूपितप्रतियोगित्वादीनां सकलप्रतियोग्यादिवृत्तित्वाभावात्प्रतियोगीतरावृत्तित्वे सति सकलप्रतियोगिवृत्तित्वादि-रूपं न प्रतियोगितात्वादिकं, किन्त्वखण्डोपाधिविशेषस्वरूपमेव तद्वत्स्वरूपं सखण्डो-पाधिरेव प्रतियोगित्वानुयोगित्वप्रकारत्वविशेष्यत्वादिकमिति। अवच्छेदकत्वाद्य-वगतये चेयं प्रक्रिया— यो निषिध्यते स प्रतियोगी, निषेधोऽभावः सोऽनुयोगी, प्रतियोगिनि प्रतियोगिता वर्त्तते तस्याश्चाभावेन सह निरूप्यनिरूपकभावः सम्बन्धः, तत्र अभावः प्रतियोगिताया निरूपकः, प्रतियोगिता चाभावनिरूपिता, येन धर्मेण येन सम्बन्धेन यस्य निषेधः स धर्मः स सम्बन्धश्च तन्निष्ठप्रतियोगिताया अवच्छेदकः,

प्रतियोगिता च तद्धर्मावच्छिन्ना तत्सम्बन्धावच्छिन्ना च, अवच्छेदके अवच्छेदकता वर्त्तते सा धर्मगता किञ्चित्सम्बन्धावच्छिन्ना, संसर्गगता सा संसर्गतापदवाच्या, सा सम्बन्धावच्छिन्ना न भवति। अनुल्लिख्यमानजात्यखण्डोपाधिनिष्ठावच्छेदकता निरवच्छिन्ना, तदन्या सावच्छिन्ना, अवच्छेदकतायाश्च प्रतियोगितया सह परस्परनिरूप्यनिरूपकभावः, तथा च भूतले संयोगेन घटत्वेन घटो नास्तीत्यत्र संयोगसम्बन्धावच्छिन्नघटत्वावच्छिन्नघटनिष्ठप्रतियोगितानिरूपकाभाववद्भूतलमित्याकारको बोधः। संयोगत्वनिष्ठावच्छेदकतानिरूपितसंयोगनिष्ठसंसर्गतानिरूपितसमवायसम्बन्धावच्छिन्ननिरवच्छिन्नघटत्वनिष्ठावच्छेदकतानिरूपितघटनिष्ठप्रतियोगितानिरूपकाभावत्वावच्छिन्नप्रकारतानिरूपितभूतलत्वावच्छिन्नविशेष्यतानिरूपको बोधः। विशेषणे प्रकारत्वं विशेष्ये विशेष्यत्वं तयोश्च परस्परं निरूप्यनिरूपकभावः सम्बन्धः। विशेष्यता च सम्बन्धावच्छिन्ना न भवति। एतत्स्पष्टीकरणञ्चैतद्ग्रन्थ एव प्रसङ्गात्कृतमतो नोपदर्श्यते। प्रकारत्वविशेष्यत्वयोर्निरूप्यनिरूपकभावः, प्रतियोगित्वप्रकारत्वादीनां सम्बन्धविशेषावच्छिन्नत्वं स्वीकर्त्तव्यं प्रतिबध्यप्रतिबन्धकभावानुरोधेन। तथाहि संयोगेन वह्निमान् पर्वत इतिबुद्धिं प्रति संयोगेन वह्न्यभाववान् पर्वत इति निश्चयस्य प्रतिबन्धकत्वं, तयोः प्रतिबध्यप्रतिबन्धकभावो यदि न प्रकारत्वादेरवच्छेदकविधया प्रवेशनेन, किन्तु संयोग-वह्नि-पर्वत-विषयकबुद्धित्वं प्रतिबध्यतावच्छेदकं संयोगेन वह्न्यभाव-पर्वत-विषयकनिश्चयत्वं प्रतिबन्धकतावच्छेदकमित्युररीकृत्य, तदा संयोगवह्निपर्वता इति बुद्धिरपि प्रतिबध्या स्यात्, संयोगेन वह्न्यभावः पर्वतश्चेत्यादिनिश्चयोऽपि प्रतिबन्धकः स्यात्। यदि तु संयोगनिष्ठसंसर्गतानिरूपकत्व-वह्नित्वावच्छिन्नप्रकारतानिरूपकत्व-पर्वतत्वावच्छिन्नविशेष्यतानिरूपकत्ववद्बुद्धित्वं प्रतिबध्यतावच्छेदकं संयोगसम्बन्धावच्छिन्नवह्नित्वावच्छिन्नप्रतियोगिताकाभावत्वावच्छिन्नप्रकारतानिरूपकत्वपर्वतत्वावच्छिन्नविशेष्यतानि - रूपकत्ववन्निश्चयत्वं प्रतिबन्धकतावच्छेदकमित्येवमाश्रित्य प्रतिबध्यप्रतिबन्धकभावस्तदा संयोगेन घटवद्भूतलं समवायेन वह्निमान्पर्वत इत्यादिबुद्धिरपि प्रतिबध्या संयोगेन वह्न्याभाववान् ह्रदः पर्वतश्च समवायेन वह्न्यभाववानित्यादिनिश्चयोऽपि च प्रतिबन्धकः स्यात्, अतः संयोगसम्बन्धावच्छिन्न-वह्नित्वावच्छिन्नप्रकारतानिरूपित-पर्वतत्वावच्छिन्नविशेष्यतानिरूपकबुद्धित्वावच्छिन्नप्रतिबद्ध्यतानिरूपित – संयोगसम्बन्धा - वच्छिन्नवह्नित्वावच्छिन्नप्रतियोगिताकाभावत्वावच्छिन्नस्वरूपसम्बन्धावच्छिन्नप्रकारता-निरूपितपर्वतत्वावच्छिन्नविशेष्यताकनिश्चयत्वावच्छिन्नप्रतिबन्धकतेत्येवमेव प्रतिबध्य-प्रतिबन्धकभाव इति। एवं प्रतियोगिताया सम्बन्धविशेषावच्छिन्नत्वस्यानिवेशे संयो-

गेन वह्निमान् पर्वत इति बुद्धिं प्रति समवायेन वह्न्यभाववान् पर्वत इति निश्चयस्यापि प्रतिबन्धकत्वं स्यादतः प्रकारत्वविशेष्यत्वयोर्निरूप्यनिरूपकभावः प्रतियोगित्वप्रकारत्वादीनां सम्बन्धविशेषावच्छिन्नत्वं प्रतिबध्यप्रतिबन्धकभावानुरोधेन स्वीकरणीयम् । निषेध्यस्य प्रतियोगित्वं अभावविरहात्मत्वं, यथा घटस्य घटाभावप्रतियोगित्वं घटाभावाभावरूपत्वं, तदुक्तं अभावविरहात्मत्वं वस्तुनः प्रतियोगितेति । एतेन निषेध्यनिषेधयोः परस्परविरहरूपत्वमायाति, यतः घटाभावस्य घटविरहरूपत्वं घटो नास्तीत्येवमनुभवादेव प्रतीयते । घटस्य घटाभावप्रतियोगित्वं घटाभावविरहत्वमुपेयत इति । एतेन प्रतियोगिशब्दोऽत्र साक्षाद्विरोधिवाचक इत्यवसितो भवति । निषेधोऽभावोऽनुयोगीतियदुच्यते, तत्रेदं तत्वम्—अभावप्रतियोगित्वयोः सामान्यतोऽभावत्वेन प्रतियोगितात्वेन निरूप्यनिरूपकभावः । घटाभावघटनिष्ठप्रतियोगित्वयोर्घटाभावत्वघटनिष्ठप्रतियोगितात्वाभ्यां निरूप्यनिरूपकभावस्तु न सम्भवति, घटाभावत्वस्य घटनिष्ठप्रतियोगितानिरूपकाभावत्वरूपतया तस्य घटनिष्ठप्रतियोगितानिरूपकतावच्छेदकत्वं तद्घटकस्य घटनिष्ठप्रतियोगितानिरूपकत्वस्यापि घटनिष्ठप्रतियोगितानिरूपकतावच्छेदकत्वमित्यात्माश्रयापत्तेः । घटनिष्ठप्रतियोगितात्वेन अभावत्वेन निरूप्यनिरूपकभावोऽपि न सम्भवति, अभावत्वसामान्यस्य सकलाभाववृत्तितया तस्य घटनिष्ठप्रतियोगितानिरूपकतावच्छेदकत्वे अभावमात्रस्य घटनिष्ठप्रतियोगितानिरूपकाभावत्वापत्तेः, ततो यस्यामभावव्यक्तौ घटनिष्ठप्रतियोगितानिरूपकत्वमस्ति तद्गतो यो धर्मविशेषस्तस्य प्रतियोगिनिरूप्यत्वादनुयोगिताशब्दव्यपदेश्यत्वं, स एवानुयोगिताविशेषः घटनिष्ठप्रतियोगितानिरूपकतावच्छेदकः, सनिरूपकत्वाच्च तस्य नाखण्डोपाधिरूपत्वमिति तन्निष्ठतद्व्यक्तित्वमखण्डोपाधिस्तद्घानयं सखण्डोपाधिः । अथवा सनिरूपकस्यापि तस्याखण्डोपाधित्वमस्तु, उक्तनियमस्तु सङ्कोचनीयः, संसर्गप्रतियोगित्वन्तु अभावप्रतियोगित्वतो विलक्षणं, तत्र यो येन सम्बन्धेन वर्त्तते स तस्य सम्बन्धस्य प्रतियोगी, यत्र वर्त्तते सोऽनुयोगी । सम्बन्ध एकप्रतियोगिकोऽपरानुयोगिक इति नियमः । सम्बन्धनिरूपितप्रतियोगिता सम्बन्धावच्छिन्ना न भवतीति ॥

यदत्र त्रुटितं तत्तु पूरयिष्यन्ति धीधनाः ॥
अशुद्धिं क्षालयिष्यन्ति तत्स्वभावैकपालकाः ॥१॥
इति साञ्जलिमभ्यर्थयते—

**मिथिलाविद्यापीठ**
माघ शुक्ल पञ्चमी
१८७७ शकसंवत्सरः

**शशिनाथ झा**

# विषयानुक्रमणिका

इति विषयानुक्रमणिका समाप्ता ॥

# त्रितलावच्छेदकतावादः ।

या शक्तिः प्रकृतित्वमेत्य गुणितां तादात्म्यदृष्टयाऽऽत्मनां
चिन्मात्रत्वमुपेयुषां प्रथमतो मान्या तनोत्याहृता ॥
या जीवेश्वरताऽऽदिकल्पलतिका माया परब्रह्मगा
साऽदृष्टैक्यमुपागता भगवती काली हृदिस्थाऽस्तु मे ॥१॥

सर्वदर्शनसर्वस्वबोधरूपाय श्रीमते ।
गुरवे धर्मदत्ताय नमः कल्याणहेतवे ॥२॥

भेदे सत्येव भिन्नाश्रयगतिवशतोऽन्योन्यवार्त्ताऽनभिज्ञा
जाता लोके वयं तत् सुकृततितिचितां मूर्तिमेकां भजामः ॥
इत्यालोच्येव विद्याः सकलमतगता यत्स्वरूपत्वमापुः
स श्रीमान् धर्मदत्तो गुरुरवतु मतिं हृद्गतः स्वर्गतोऽपि ॥३॥

त्रितलावच्छेदकता-वादो गुरुक्रमागतः ।
शास्त्रानारूढरूपत्वाद्बहुधोत्प्रेक्षितो बुधैः ॥४॥

स्वशिष्यमात्राभिज्ञानबुद्ध्याऽन्येभ्योऽप्रकाशितः ॥
शिष्याज्ञानादिदोषेण व्युच्छिन्नस्तत्त्वतस्तु सः ॥५॥

इदानीन्तनछात्राणां जिज्ञासूनां विशेषतः ॥
तद्बोधगतये वच्मि प्रक्रियां कामपि स्फुटम् ॥६॥

त्रितलाऽवच्छेदकता व्याप्त्यादीनां प्ररूपणे ॥
सुलभाऽभावधारायाः प्रवेशात्काऽत्र चित्रता ॥७॥
विशिष्टाभावसंलग्नाऽभावधारादिभासके ॥
ज्ञाने सा पुच्छलग्नस्था धीधनानां न मोददा ॥८॥

अनियन्त्रितता यत्र ज्ञाने विषयसङ्गता ॥
तत्राप्यलौकिकासत्त्या सा भाने नैव दुर्लभा ॥९॥
नीलो घट इतिज्ञाने शाब्दे वृत्त्यादियन्त्रिते ॥
द्वे एवावच्छेदकत्वे दृश्येते ते त्वेकतले ॥१०॥

तत्रापि यदि त्रितलावच्छेदकता स्यात्तदा ॥
बहुस्थानगता मोदं विद्वद्भ्यो दास्यति ध्रुवम् ॥११॥
विषयत्वानामभेदो मिथोऽवच्छेद्यताऽथवा ॥
जगदीशमते पूर्वो गदाधरमते परः ॥१२॥
अन्तराभासमानानां समानाधारवर्तिनाम् ॥
मिथः स्याद्विषयत्वानां ज्ञानेऽवच्छेद्यता समे ॥१३॥
इत्येवं नियमस्तत्र क्रमेणैव व्यवस्थितः ॥
आद्ये प्रकान्तवादस्तु भावनीयः प्रयत्नतः ॥१४॥
विषयत्वे निरूप्यत्वं बोधस्यावश्यमेव हि ॥
सावच्छिन्नं तेन योज्याऽवच्छेदकपरम्परा ॥१५॥
द्वितीये सा स्फुटा तेन तद्वादस्योपजीवनात् ॥
त्रितलावच्छेदकता-वादो भाति तथोच्यते ॥१६॥

+ + +

## तत्र तावत् त्रितलावच्छेदकतानयनप्रकार उपदर्श्यते—

नीलो घट इत्यत्र घटे विशेष्यतात्रयं वर्तते—एका तादात्म्यसम्बन्धावच्छिन्न-नीलरूपवन्निष्ठप्रकारतानिरूपिता घटत्वनिष्ठावच्छेदकतानिरूपिता; द्वितीया समवाय-सम्बन्धावच्छिन्ननीलनिष्ठप्रकारतानिरूपिता घटत्वनिष्ठावच्छेदकतानिरूपिता, तृतीया–समवायसम्बन्धावच्छिन्नघटत्वनिष्ठप्रकारतानिरूपिता निरवच्छिन्ना । न च प्रथमाऽऽ-काङ्क्षाज्ञानप्रयोज्या तृतीया वृत्तिज्ञानप्रयोज्येत्येतद्‌द्वयं शाब्दनिरूपितं भवतु, द्वितीया तु कथं, स्वन्तनीलपदसमभिव्याहृतस्वन्तघटपदत्वरूपाकाङ्क्षाज्ञानस्य तादात्म्यातिरिक्त-सम्बन्धावच्छिन्नप्रकारतायां तन्निरूपितविशेष्यतायाञ्चाप्रयोजकत्वात्, कारणतावच्छे-दकविषयतायाश्च कार्यतावच्छेदकविषयतामात्रप्रयोजकत्वेऽपि द्वितीयविशेष्यतायाः कार्यतानवच्छेदकत्वेनाकाङ्क्षाज्ञानीयविषयताप्रयोज्यत्वासम्भवादिति वाच्यम्, यतः प्रवृ-त्ताविष्टसाधनतावच्छेदकप्रकारकज्ञानत्वेन कारणत्वस्य प्रत्यक्षानुमित्यादौ क्लृप्ततया "इदं रजतमिति वाक्यजज्ञानस्य प्रवर्त्तकत्वानुरोधेन तादृशकारणतावच्छेदकरजतत्व-प्रकारकज्ञानत्ववत्त्वं वाच्यं, तत्रापि भवन्नीत्या समवायसम्बन्धावच्छिन्नरजतत्वनिष्ठप्र-कारतानिरूपितेदन्त्वावच्छिन्नविशेष्यता वृत्तिज्ञानाकाङ्क्षाज्ञानाभ्यां प्रयोज्या कथं स्यादित्याक्षेपस्य समानत्वात् । यदि चैकत्र विशेषणत्वेनोपस्थितस्यान्यत्र न स्वातन्त्र्ये-

णान्वय इति नियमानुरोधात् समवायसम्बन्धावच्छिन्नरजतत्वनिष्ठप्रकारताद्याः पारतन्त्रीया एव, उक्ताकाङ्क्षाज्ञानस्य तु स्वतन्त्रतादात्म्यसम्बन्धावच्छिन्नप्रकारताकज्ञानत्वं कार्यतावच्छेदकमिति न ततः स्वतन्त्रतादात्म्यातिरिक्तसम्बन्धावच्छिन्नप्रकारताकशाब्दबोधसम्भवः, यत्र स्वतन्त्रकिञ्चिद्धर्मवन्निष्ठतादात्म्यसम्बन्धावच्छिन्नप्रकारताकज्ञानत्वं तत्र नियमेन प्रकारविशेषणीभूतधर्मनिष्ठपारतन्त्रीयतादात्म्यसम्बन्धातिरिक्तसम्बन्धावच्छिन्नप्रकारताकज्ञानत्वमिति तादृशज्ञानत्वस्य सामान्यसामग्रीबलादेव तत्र भाव इति सामान्यत उक्ताकाङ्क्षाज्ञानमेव प्रयोजकमिति सा प्रकारता तन्निरूपितविशेष्यता चाकाङ्क्षाज्ञानप्रयोज्या भवत्येव, निपातातिरिक्तनामार्थयोर्भेदेन न साक्षादन्वय इति नियमेऽपि नामार्थपदेन स्वातन्त्र्येणान्वयिनामार्थस्यैव ग्रहणमिति न तादृशनियमक्षतिरिति विभाव्यते तदा नीलो घट इत्यत्रापि नीलरूपनिष्ठसमवायसम्बन्धावच्छिन्नप्रकारता तन्निरूपितविशेष्यता च पारतन्त्रीयेति सापि सामान्यतस्तादृशाकाङ्क्षाज्ञानप्रयोज्यैवेति, अत्रापि नीलरूपाभाववान् घट इति ज्ञानम्प्रति प्रतिबन्धकत्वानुरोधेन समवायसम्बन्धावच्छिन्ननीलरूपनिष्ठप्रकारताकत्वाभ्युपगम आवश्यकः। यदि गौरवादविभयता शाब्दबोधे तादात्म्येनेष्टसाधनप्रकारकज्ञानत्वेन कारणतान्तरमेवाभ्युपेयते, एवमपि तद्धर्मविशिष्टस्य यत्रान्वयस्तत्र विशेषणत्वोपपत्तये तद्धर्मस्याप्यन्वयः स्वाश्रयसम्बन्धेनेत्यस्य स्वीकृततया नीलरूपवतस्तादात्म्येन घटे प्रकारत्वे नीलरूपस्यापि स्वाश्रयतादात्म्येन प्रकारत्वम्, एवमभ्युपगमे स्वाश्रयतादात्म्यस्यापि तादात्म्यत्वमस्त्येवेति नोक्ताकाङ्क्षाज्ञानशाब्दविशेषकार्यकारणभावस्योक्तनियमस्य च व्याकोपः, तावता स्वाश्रयतादात्म्यसम्बन्धावच्छिन्ननीलनिष्ठप्रकारता तन्निरूपितविशेष्यता च पारतन्त्रीयाऽऽकाङ्क्षाज्ञानप्रयोज्या स्यादेव, तामुपादायाऽपि विशेष्यतात्रयं घटे सम्भवति, उक्तानां त्रयाणां विशेष्यत्वानां गदाधरमते मिथोऽवच्छेद्यावच्छेदकभावः, तदवच्छेद्यत्वं नाम तन्निष्ठावच्छेदकतानिरूपितत्वम्, तत्र निरवच्छिन्नविशेष्यताया अवच्छेद्यतया विवक्षितत्वे सा स्वरूपनिष्ठसंसर्गतानिरूपितसमवायत्वनिष्ठावच्छेदकतानिरूपितसमवायनिष्ठसंसर्गतानिरूपितनिरवच्छिन्नघटत्वनिष्ठप्रकारतानिरूपिता सती स्वरूपनिष्ठसंसर्गतानिरूपितसमवायत्वनिष्ठावच्छेदकतानिरूपितसमवायनिष्ठसंसर्गतानिरूपितनीलत्वनिष्ठावच्छेदकतानिरूपितं यत्स्वरूपनिष्ठसंसर्गतानिरूपितसमवायत्वनिष्ठावच्छेदकतानिरूपितसमवायनिष्ठसंसर्गतानिरूपितं नीलनिष्ठावच्छेदकत्वं तन्निरूपिता या स्वरूपनिष्ठसंसर्गतानिरूपिततादात्म्यत्वनिष्ठावच्छेदकतानिरूपिततादात्म्यनिष्ठसंसर्गतानिरूपिता नीलरूपवन्निष्ठप्रकारता तन्निरूपिता स्वरूपनिष्ठसंसर्गतानिरूपित-

समवायत्वनिष्ठावच्छेदकतानिरूपितसमवायनिष्ठसंसर्गतानिरूपितनिरवच्छिन्नघटत्व निष्ठावच्छेदकतानिरूपिता घटनिष्ठविशेष्यता तदवच्छेद्या (तादृशविशेष्यत्वनिष्ठावच्छेदकतानिरूपिता) या स्वरूपनिष्ठसंसर्गतानिरूपितसमवायत्वनिष्ठावच्छेदकतानिरूपितसमवायनिष्ठसंसर्गतानिरूपितनीलत्वनिष्ठावच्छेदकतानिरूपितं यत्स्वरूपनिष्ठसंसर्गतानिरूपितस्वाश्रयतादात्म्यत्वनिष्ठावच्छेदकतानिरूपितस्वाश्रयतादात्म्यनिष्ठसंसर्गतानिरूपितं पारतन्त्रीयं नीलनिष्ठप्रकारत्वं तन्निरूपिता स्वरूपनिष्ठसंसर्गतानिरूपितसमवायत्वनिष्ठावच्छेदकतानिरूपितसमवायनिष्ठसंसर्गतानिरूपितनिरवच्छिन्नघटत्वनिष्ठावच्छेदकतानिरूपिता घटनिष्ठविशेष्यता तदवच्छेद्या (तादृशविशेष्यत्वनिष्ठावच्छेदकतानिरूपिता) भवति, निरवच्छिन्नविशेष्यतायास्तादृशविशेष्यत्वनिष्ठावच्छेदकतानिरूपितत्वेऽपि धर्मविधया किञ्चिन्निष्ठावच्छेदकतानिरूपितत्वाभावेन न निरवच्छिन्नत्वस्य हानिः, तादृशविशेष्यतानिरूपको नीलो घट इति वाक्यजबोधः। न च निरवच्छिन्नविशेष्यतानिरूपिका या विशेष्यत्वनिष्ठावच्छेदकता सा किञ्चित्सम्बन्धावच्छिन्ना, न वा, आद्ये तस्या धर्मविधयाऽवच्छेदकतातो न भेदः, किञ्चित्सम्बन्धावच्छिन्नावच्छेदकताया एव धर्मविधयाऽवच्छेदकतात्वात्, तथा च तादृशविशेष्यतानिष्ठावच्छेदकतानिरूपितत्वेन निरवच्छिन्नत्वं तस्या न स्यात्। द्वितीये तादृशविशेष्यत्वनिष्ठावच्छेदकतायाः संसर्गतात्वं स्यात्, सम्बन्धानवच्छिन्नावच्छेदकताया एव संसर्गतात्वात्, एवं च सति तादृशविशेष्यत्वनिष्ठावच्छेदकतानिरूपितत्वं संसर्गतानिरूपितत्वविरुद्धविशेष्यतात्ववत्यां तस्यां न स्यादिति वाच्यं, देशकालादिनिष्ठावच्छेदकतावत्तस्यास्सम्बन्धानवच्छिन्नत्वेऽपि संसर्गतावैलक्षण्यस्यैवाभ्युपगमात्। संसर्गतालक्षणे देशकालादिनिष्ठावच्छेदकतागतत्ववारणाय तत्तद्भिन्नत्वनिवेशवदेतादृशावच्छेदकताभेदस्यापि निवेशनीयत्वेन तदतिप्रसङ्गवारणसम्भवात्, यथा च देशकालादिर्न धर्मो न वा संसर्गस्तथापि प्रतीत्यनुरोधेन धर्मसंसर्गगतावच्छेदकताविलक्षणाऽवच्छेदकता तत्रोररीक्रियते, तथाऽनन्तराभासमानेत्यादिनियमानुरोधेनोक्तविशेष्यतादावपि धर्मसंसर्गान्यतरानात्मके धर्मसंसर्गगतावच्छेदकताविलक्षणावच्छेदकताऽभ्युपेयते। ननु समवायत्वनिष्ठावच्छेदकता यथा समवायनिष्ठसंसर्गतानिरूपिततयाऽभ्युपगम्यते तथा स्वरूपत्वनिष्ठावच्छेदकताऽपि स्वरूपनिष्ठसंसर्गतानिरूपिततयाऽभ्युपेयत एव, एवञ्च स्वरूपत्वनिष्ठावच्छेदकतानिरूपितत्वस्य स्वरूपनिष्ठसंसर्गताविशेषणतया कुतो नोपादानं तथाऽनुपादाने न्यूनोक्तिरेव प्रसज्यत इति चेत्, घटत्वावच्छिन्नविशेष्यकनीलभेदप्रकारकबुद्धौ नीलो घट इति वाक्यजनिश्चयस्य प्रतिबन्धकत्वानुरोधेन घटत्वनिष्ठा-

वच्छेदकताकविशेष्यताकत्वमावश्यकम्, समवायान्यसम्बन्धावच्छिन्नघटत्वनिष्ठावच्छेदकताकविशेष्यताकनिश्चयस्य प्रतिबन्धकत्ववारणाय घटत्वनिष्ठावच्छेदकतायां समवायसम्बन्धावच्छिन्नत्वस्य प्रवेशनीयतयोक्तशाब्दबोधीयघटत्वनिष्ठावच्छेदकताऽपि समवायसम्बन्धावच्छिन्नाऽभ्युपेया, ततस्तदवच्छेद्यप्रकारताऽपि समवायसम्बन्धावच्छिन्नैव, अन्यसम्बन्धावच्छिन्नघटत्वनिष्ठप्रकारतायास्तत्राभावात्, समवायसम्बन्धावच्छिन्नत्वञ्च समवायनिष्ठसंसर्गतानिरूपितत्वं समवायश्चानुल्लिख्यमानजात्यखण्डोपाध्यतिरिक्तत्वात्समवायत्वेन भासत इति तन्निष्ठा संसर्गता भवति समवायत्वनिष्ठावच्छेदकतानिरूपिता, परमाण्वादौ नित्येऽत्यन्ताभावसम्बन्धे स्वरूपेऽतिप्रसङ्गपरिहाराय प्रतियोग्यनुयोगिभिन्नत्वे सति नित्यसम्बन्धत्वरूपत्वे समवायत्वस्य सखण्डोपाधिरूपतया तन्निष्ठावच्छेदकतायाः सावच्छिन्नत्वतोऽवच्छेदकतापरम्पराऽकामेनाऽपि स्वीकरणीया स्यादतः समवायनिष्ठतद्व्यक्तित्वमेव समवायत्वमतस्तद्व्यक्तित्वात्मकाखण्डोपाधिरूपस्य तस्य स्वरूपतो भानसम्भवेन तन्निष्ठावच्छेदकता भवति निरवच्छिन्ना, परन्त्वस्याः स्वरूपनिष्ठसंसर्गतानिरूपितत्वं स्वीकरणीयमेव, अन्यथा सम्बन्धानवच्छिन्नावच्छेदकतात्वेनास्याः संसर्गतात्वं स्यात्, तथासति तन्निरूपितत्वं समवायनिष्ठसंसर्गतायां न स्यात्, अनवस्थाभयेन संसर्गतायाः संसर्गतानिरूपितत्वानङ्गीकारात्, समवायत्वनिष्ठावच्छेदकतानिरूपिका तु स्वरूपनिष्ठा संसर्गता प्रकृते स्वरूपत्वनिष्ठावच्छेदकतानिरूपिता न स्वीकरणीया, तथाऽभ्युपगमे स्वरूपत्वनिष्ठावच्छेदकतायां स्वरूपनिष्ठसंसर्गतानिरूपितत्वमवश्यमभ्युपगन्तव्यं स्यात्, अन्यथा तस्याः संसर्गतात्वापत्त्या तन्निरूपितत्वं स्वरूपनिष्ठसंसर्गतायामुक्तयुक्त्या न स्यात्, तथोपगमे च साऽपि स्वरूपनिष्ठा संसर्गता स्वरूपनिष्ठसंसर्गतात्वाविशेषात् स्वरूपत्वनिष्ठावच्छेदकतानिरूपिता भवेत्, साऽपि च स्वरूपत्वनिष्ठावच्छेदकतोक्तहेतोस्स्वरूपनिष्ठसंसर्गतानिरूपिता स्यादित्येवं स्वरूपनिष्ठसंसर्गतास्वरूपत्वनिष्ठावच्छेदकतास्वरूपनिष्ठसंसर्गतास्वरूपत्वनिष्ठावच्छेदकतेतिक्रमपरम्परोपनिपातिनी अनवस्था कथङ्कारं वारणीयेति समवायत्वनिष्ठावच्छेदकतानिरूपिका स्वरूपनिष्ठसंसर्गता स्वरूपत्वनिष्ठावच्छेदकत्वानिरूपितैवेति, अत एव संसर्गस्य स्वरूपतोऽपि भानमित्यामनन्त्यभियुक्ताः। अन्यत्र स्वरूपस्य सखण्डोपाधिस्वरूपत्वेऽपि समवायनिष्ठतद्व्यक्तित्वात्मकसमवायत्वप्रतियोगिकस्य तस्य प्रतियोगिस्वरूपतयाऽखण्डोपाधित्वमेव, अतस्तस्य स्वरूपतोऽपि भासमानत्वे तन्निष्ठसंसर्गताया निरवच्छिन्नत्वं भवति सङ्गतम्। ननु शाब्दबोधनिरूपिता शाब्दबोधविषयतानिरूपिता वाऽवच्छेदकता विषयतारूपैव भवति, तथा चोक्तविशेष्यत्वनिष्ठावच्छेदकतायां शाब्द-

बोधीयनिरवच्छिन्नविशेष्यत्वाख्यविषयतानिरूपितायां विषयतात्वं स्वीकरणीयम्, न च तत्सम्भवति, विशेष्यत्वादीनां शाब्दबोधाविषयत्वेन तन्निष्ठावच्छेदकताया विषयतारूपत्वासम्भवादिति चेत्, तत्र ब्रूमः, इदानीं चैत्रे नीलघटशाब्दबोध इतिप्रतीत्यैतत्कालेऽपि शाब्दबोधनिरूपिताऽवच्छेदकता समस्ति न च सा विषयतारूपा, एवमात्मविशेषगुणज्ञानरूपस्य शाब्दबोधस्यावच्छेदकं शरीरं भवति ततः शाब्दबोधनिरूपिताऽवच्छेदकता शरीरनिष्ठा भवति, न च सा विषयतारूपा, विषयनिष्ठावच्छेदकताया एव शाब्दबोधनिरूपिताया विषयतात्वस्य वाच्यत्वात्, एतेन शाब्दबोधनिरूपितत्वस्य विषयतात्वव्याप्यत्वमप्यपास्तम्, देशकालादिनिष्ठावच्छेदकतायां शाब्दबोधनिरूपितत्वस्य सत्त्वेऽपि विषयतात्वस्याभावात्, एवं शाब्दबोधनिरूपितायामधिकरणतायामाधेयतायाञ्च शाब्दबोधनिरूपितत्वमस्ति विषयतात्वन्नास्तीतिव्यभिचारेणोक्तव्याप्यव्यापकभावो न सम्भवतीति, घटे इदानीं शाब्दबोधविशेष्यत्वमितिप्रतीत्या शाब्दबोधनिरूपितविशेष्यतानिरूपिताऽवच्छेदकता कालनिष्ठाऽपि भवति न तु सा विषयतारूपेतिव्यभिचाराच्छाब्दबोधविषयतानिरूपितावच्छेदकतात्वमपि न विषयतात्वप्रयोजकम्। एतेन शाब्दबोधविषयतानिरूपितत्वस्य विषयतात्वव्याप्यत्वमपि प्रत्युक्तम्, शाब्दबोधविषयतानिरूपितत्वस्य शाब्दबोधविषयतानिरूपितायामाधेयतायाञ्च सत्त्वेन तत्र विषयतात्वाभावेन व्यभिचारात्, तस्माद्युक्तमविषयतारूपमपि विशेषत्वनिष्ठावच्छेदकत्वं निरवच्छिन्नविशेष्यतानिरूपितमिति। प्रकृतमनुसरामः—घटत्वे च नीलो घट इतिशाब्दबोधीयं विषयत्वं पञ्चविधम्, एकं निरवच्छिन्नघटनिष्ठविशेष्यतानिरूपितं निरवच्छिन्नं स्वरूपनिष्ठसंसर्गतानिरूपितसमवायत्वनिष्ठावच्छेदकतानिरूपितसमवायनिष्ठसंसर्गतानिरूपितं प्रकारत्वं, द्वितीयं स्वरूपनिष्ठसंसर्गतानिरूपितसमवायत्वनिष्ठावच्छेदकतानिरूपितसमवायनिष्ठसंसर्गतानिरूपितनीलत्वनिष्ठावच्छेदकतानिरूपितं यत्स्वरूपनिष्ठसंसर्गतानिरूपितसमवायत्वनिष्ठावच्छेदकतानिरूपितसमवायनिष्ठसंसर्गतानिरूपितनीलनिष्ठावच्छेदकत्वं तन्निरूपितं यत्स्वरूपनिष्ठसंसर्गतानिरूपिततादात्म्यत्वनिष्ठावच्छेदकतानिरूपिततादात्म्यनिष्ठसंसर्गतानिरूपितं नीलरूपवन्निष्ठप्रकारत्वं तन्निरूपितघटनिष्ठविशेष्यतानिरूपितं स्वरूपनिष्ठसंसर्गतानिरूपितसमवायत्वनिष्ठावच्छेदकतानिरूपितसमवायनिष्ठसंसर्गतानिरूपितं निरवच्छिन्नमवच्छेदकत्वम्। तृतीयं स्वरूपनिष्ठसंसर्गतानिरूपितसमवायत्वनिष्ठावच्छेदकतानिरूपितसमवायनिष्ठसंसर्गतानिरूपितनीलत्वनिष्ठावच्छेदकतानिरूपितस्वरूपनिष्ठसंसर्गतानिरूपितस्वाश्रयतादात्म्यत्वनिष्ठावच्छेदकतानिरूपितस्वाश्रयतादात्म्यनिष्ठसंसर्गतानिरूपितनीलरूपनिष्ठप्रकारतानिरूपितघटनिष्ठविशेष्यतानिरूपितं स्व-

रूपनिष्ठसंसर्गतानिरूपितसमवायत्वनिष्ठावच्छेदकतानिरूपितसमवायनिष्ठसंसर्गतानिरूपितं निरवच्छिन्नमवच्छेदकत्वम्, तद्धर्मविशिष्टे भासमानं सत्तद्धर्मे सामानाधिकरण्येन भासत इतिनियमानुगृहीतं तुरीयं पञ्चमञ्च निरवच्छिन्नविशेष्यत्वं, तत्र तुरीयं स्वरूपनिष्ठसंसर्गतानिरूपितसमवायत्वनिष्ठावच्छेदकतानिरूपितसमवायनिष्ठसंसर्गतानिरूपितनीलत्वनिष्ठावच्छेदकतानिरूपितस्वरूपनिष्ठसंसर्गतानिरूपितसमवायत्वनिष्ठावच्छेदकतानिरूपितसमवायनिष्ठसंसर्गतानिरूपितनीलरूपनिष्ठावच्छेदकतानिरूपितस्वरूप - निष्ठसंसर्गतानिरूपितस्वाभिन्नवृत्तित्वत्वनिष्ठावच्छेदकतानिरूपितस्वाभिन्नवृत्तित्वनिष्ठसंसर्गतानिरूपितनीलरूपवन्निष्ठप्रकारतानिरूपितं निरवच्छिन्नं विशेष्यत्वम्। पञ्चमञ्च स्वरूपनिष्ठसंसर्गतानिरूपितसमवायत्वनिष्ठावच्छेदकतानिरूपितसमवायनिष्ठसंसर्गतानिरूपितनीलत्वनिष्ठावच्छेदकतानिरूपितस्वरूपनिष्ठसंसर्गतानिरूपितस्वाश्रयतादात्म्यवद्वृत्तित्वत्वनिष्ठावच्छेदकतानिरूपितस्वाश्रयतादात्म्यवद्वृत्तित्वनिष्ठसंसर्गतानिरूपितनीलरूपनिष्ठप्रकारतानिरूपितं निरवच्छिन्नं विशेष्यत्वमिति, पञ्चानामपि घटत्वगतविषयत्वानामवच्छेद्यावच्छेदकभावः, तत्र प्रथमायाःशाब्दबोधनिरूपितनिरवच्छिन्नघटत्वनिष्ठप्रकारताया अवच्छेद्यत्वेन तन्निरूपितावच्छेदकता पञ्चमतयोपदर्शितघटत्वगतविशेष्यत्वनिष्ठा, पञ्चमी घटत्वनिष्ठा विशेष्यता तुरीयघटत्वनिष्ठविशेष्यतानिष्ठावच्छेदकतानिरूपितेति पञ्चमघटत्वनिष्ठविशेष्यत्वनिष्ठावच्छेदकता तुरीयघटत्वनिष्ठविशेष्यत्वनिष्ठावच्छेदकतानिष्ठावच्छेदकतानिरूपिता, तुरीयघटत्वनिष्ठविशेष्यता तु तृतीयघटत्वनिष्ठावच्छेदकतात्मकविषयत्वनिष्ठावच्छेदकतानिरूपिता, तुरीयघटत्वनिष्ठविशेष्यत्वनिष्ठावच्छेकता तृतीयघटत्वनिष्ठावच्छेदकतात्मकविषयत्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकतानिरूपिता, तुरीयघटत्वनिष्ठविशेष्यत्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकता पुनस्तृतीयघटत्वनिष्ठावदकतात्मकविषयत्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकतानिरूपिता, तृतीयघटत्वनिष्ठावच्छेदकतात्मकविषयता द्वितीयघटत्वनिष्ठावच्छेदकतात्मकविषयत्वनिष्ठावच्छेदकतानिरूपिता, तृतीयघटत्वनिष्ठावच्छेदकतात्मकविषयतानिष्ठावच्छेदकता द्वितीयघटत्वनिष्ठावच्छेदकतात्मकविषयत्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकतानिरूपिता, तृतीयघटत्वनिष्ठावच्छेदकतात्मकविषयत्वनिष्ठावच्छेदकतानिष्ठवच्छेदकता द्वितीयघटत्वनिष्ठावच्छेदकतात्मकविषयत्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकतानिरूपिता, तृतीयघटत्वनिष्ठावच्छेदकतात्मकविषयत्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकता द्वितीयघटत्वनिष्ठावच्छेदकतात्मकविषयत्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकतानिरूपिता, इत्थञ्च नीलो घट इतिशाब्दबोधीया

निरवच्छिन्नघटनिष्ठविशेष्यतानिरूपिता स्वरूपनिष्ठसंसर्गतानिरूपितसमवायत्वनिष्ठाव-च्छेदकतानिरूपितसमवायनिष्ठसंसर्गतानिरूपिता निरवच्छिन्नघटत्वनिष्ठप्रकारता स्वरूपनिष्ठसंसर्गतानिरूपितसमवायत्वनिष्ठावच्छेदकतानिरूपितसमवायनिष्ठसंसर्गतानिरूपितनीलत्वनिष्ठावच्छेदकतानिरूपितं यत्स्वरूपनिष्ठसंसर्गतानिरूपितसमवायत्वनिष्ठावच्छेदकतानिरूपितसमवायनिष्ठसंसर्गतानिरूपितं नीलनिष्ठावच्छेदकत्वं तन्निरूपितं यत्स्वरूपनिष्ठसंसर्गतानिरूपिततादात्म्यत्वनिष्ठावच्छेदकतानिरूपिततादात्म्यनिष्ठसंसर्गतानिरूपितं नीलरूपवन्निष्ठप्रकारत्वं तन्निरूपितघटनिष्ठविशेष्यतानिरूपितं स्वरूपनिष्ठसंसर्गतानिरूपितसमवायत्वनिष्ठावच्छेदकतानिरूपितसमवायनिष्ठसंसर्गतानिरूपितं यन्निरवच्छिन्नं घटत्वनिष्ठावच्छेदकत्वं तन्निष्ठावच्छेदकत्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकतानिरूपिता या स्वरूपनिष्ठसंसर्गतानिरूपितसमवायत्वनिष्ठावच्छेदकतानिरूपितसमवायनिष्ठसंसर्गतानिरूपितनीलत्वनिष्ठावच्छेदकतानिरूपितस्वरूपनिष्ठसंसर्गतानिरूपितस्वाश्रयतादात्म्यत्वनिष्ठावच्छेदकतानिरूपितस्वाश्रयतादात्म्यनिष्ठसंसर्गतानिरूपितनीलरूपनिष्ठप्रकारतानिरूपितघटनिष्ठविशेष्यतानिरूपितं स्वरूपनिष्ठसंसर्गतानिरूपितसमवायत्वनिष्ठावच्छेदकतानिरूपितसमवायनिष्ठसंसर्गतानिरूपितं निरवच्छिन्नं यद्घटत्वनिष्ठावच्छेदकत्वं तन्निष्ठावच्छेकत्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकता तन्निरूपिता या स्वरूपनिष्ठसंसर्गतानिरूपितसमवायत्वनिष्ठावच्छेदकता निरूपितसमवायनिष्ठसंसर्गतानिरूपितनीलत्वनिष्ठावच्छेदकतानिरूपितस्वरूपनिष्ठसंसर्गतानिरूपितसमवायत्वनिष्ठावच्छेदकतानिरूपितसमवायनिष्ठसंसर्गतानिरूपितनीलनिष्ठावच्छेदकतानिरूपितस्वरूपनिष्ठसंसर्गतानिरूपितस्वाभिन्नवृत्तित्वत्वनिष्ठावच्छेदकता-निरूपितस्वाभिन्नवृत्तित्वनिष्ठसंसर्गतानिरूपितनीलरूपवन्निष्ठप्रकारतानिरूपितं यन्निरवच्छिन्नं घटत्वनिष्ठविशेष्यत्वं तन्निष्ठावच्छेदकतानिष्ठावच्छेदकतानिरूपिता या स्वरूपनिष्ठसंसर्गतानिरूपितसमवायत्वनिष्ठावच्छेदकतानिरूपितसमवायनिष्ठसंसर्गतानिरूपित-नीलत्वनिष्ठावच्छेदकतानिरूपितस्वरूपनिष्ठसंसर्गतानिरूपितस्वाश्रयतादात्म्यवद्वृत्तित्वत्व-निष्ठावच्छेदकतानिरूपितस्वाश्रयतादात्म्यवद्वृत्तित्वनिष्ठसंसर्गतानिरूपितनीलरूपनिष्ठ-प्रकारतानिरूपितं यन्निरवच्छिन्नं घटत्वनिष्ठविशेष्यत्वं तन्निष्ठावच्छेदकता तन्निरूपिता भवति, तादृशप्रकारतानिरूपकश्च नीलो घट इतिशाब्दबोधः। नीलरूपवति च नीलो घट इतिशाब्दबोधीयं विषयतात्रयं, तत्रैकं स्वरूपनिष्ठसंसर्गतानिरूपितसमवायत्वनिष्ठा-वच्छेदकतानिरूपितसमवायनिष्ठसंसर्गतानिरूपितघटत्वनिष्ठावच्छेदकतानिरूपितघटनिष्ठ-विशेष्यतानिरूपितं स्वरूपनिष्ठसंसर्गतानिरूपितसमवायत्वनिष्ठावच्छेदकतानिरूपितसम-

वायनिष्ठसंसर्गतानिरूपितनीलत्वनिष्ठावच्छेदकतानिरूपितस्वरूपनिष्ठसंसर्गतानिरूपितस-
मवायत्वनिष्ठावच्छेदकतानिरूपितसमवायनिष्ठसंसर्गतानिरूपितनीलनिष्ठावच्छेदकता-
निरूपितस्वरूपनिष्ठसंसर्गतानिरूपिततादात्म्यत्वनिष्ठावच्छेदकतानिरूपिततादात्म्यनिष्ठ-
संसर्गतानिरूपितप्रकारत्वं, द्वितीयं निरवच्छिन्नघटत्वनिष्ठविशेष्यतानिरूपितं स्वरूप-
निष्ठसंसर्गतानिरूपितसमवायत्वनिष्ठावच्छेदकतानिरूपितसमवायनिष्ठसंसर्गतानिरूपित-
नीलत्वनिष्ठावच्छेदकतानिरूपितस्वरूपनिष्ठसंसर्गतानिरूपितसमवायत्वनिष्ठावच्छेदकता-
निरूपितसमवायनिष्ठसंसर्गतानिरूपितनीलनिष्ठावच्छेदकतानिरूपितस्वरूपनिष्ठसंसर्गता-
निरूपितस्वाभिन्नवृत्तित्वत्वनिष्ठावच्छेदकतानिरूपितस्वाभिन्नवृत्तित्वनिष्ठसंसर्गतानिरू-
पितप्रकारत्वं, तृतीयं स्वरूपनिष्ठसंसर्गतानिरूपितसमवायत्वनिष्ठावच्छेदकतानिरूपित-
समवायनिष्ठसंसर्गतानिरूपितनीलत्वनिष्ठावच्छेदकतानिरूपितस्वरूपनिष्ठसंसर्गतानिरू-
पितसमवायत्वनिष्ठावच्छेदकतानिरूपितसमवायनिष्ठसंसर्गतानिरूपितनीलनिष्ठप्रकारता-
निरूपितं निरवच्छिन्नविशेष्यत्वं, तेषां त्रयाणां विषयत्वानामवच्छेद्याऽवच्छेदकभावः।
तत्र निरवच्छिन्नविशेष्यत्वस्यावच्छेद्यत्वे तदवच्छेदकत्वं निरवच्छिन्नघटत्वनिष्ठविशे-
ष्यतानिरूपितप्रकारत्वे तदवच्छेदकत्वं घटत्वावच्छिन्नविशेष्यतानिरूपितप्रकारत्वे इत्येवं
विवक्षायामित्थं सम्पद्यते, नीलो घट इतिशाब्दबोधीया स्वरूपनिष्ठसंसर्गतानिरूपित-
समवायत्वनिष्ठावच्छेदकतानिरूपितसमवायनिष्ठसंसर्गतानिरूपितनीलत्वनिष्ठावच्छेद-
कतानिरूपितस्वरूपनिष्ठसंसर्गतानिरूपितसमवायत्वनिष्ठावच्छेदकतानिरूपितसमवायनि-
ष्ठसंसर्गतानिरूपितनीलनिष्ठप्रकारतानिरूपिता निरवच्छिन्ना विशेष्यता, स्वरूपनिष्ठ-
संसर्गतानिरूपितसमवायत्वनिष्ठावच्छेदकतानिरूपितसमवायनिष्ठसंसर्गतानिरूपितघट-
त्वनिष्ठावच्छेदकतानिरूपितघटनिष्ठविशेष्यतानिरूपितं यत्स्वरूपनिष्ठसंसर्गतानिरूपित-
समवायत्वनिष्ठावच्छेदकतानिरूपितसमवायनिष्ठसंसर्गतानिरूपितनीलत्वनिष्ठावच्छेद-
कतानिरूपितस्वरूपनिष्ठसंसर्गतानिरूपितसमवायत्वनिष्ठावच्छेदकतानिरूपितसमवायनि-
ष्ठसंसर्गतानिरूपितनीलनिष्ठावच्छेदकतानिरूपितं स्वरूपनिष्ठसंसर्गतानिरूपिततादात्म्य-
त्वनिष्ठावच्छेदकतानिरूपिततादात्म्यनिष्ठसंसर्गतानिरूपितं नीलरूपवन्निष्ठप्रकारत्वं तन्नि-
ष्ठावच्छेदकत्वनिष्ठावच्छेदकतानिरूपिता या निरवच्छिन्नघटत्वनिष्ठविशेष्यता-
निरूपितं यत्स्वरूपनिष्ठसंसर्गतानिरूपितसमवायत्वनिष्ठावच्छेदकतानिरूपितसमवायनिष्ठ-
संसर्गतानिरूपितनीलत्वनिष्ठावच्छेदकतानिरूपितस्वरूपनिष्ठसंसर्गतानिरूपितसमवायत्व-
निष्ठावच्छेदकतानिरूपितसमवायनिष्ठसंसर्गतानिरूपितनीलनिष्ठावच्छेदकतानिरूपितस्व-
रूपनिष्ठसंसर्गतानिरूपितस्वाभिन्नवृत्तित्वत्वनिष्ठावच्छेदकतानिरूपितस्वाभिन्नवृत्तित्वनिष्ठ-

संसर्गतानिरूपितं प्रकारत्वं तन्निष्ठावच्छेदकता तन्निरूपिता, तादृशविशेष्यतानिरूपको नीलो घटइतिशाब्दबोधः। नीलरूपे च नीलो घट इतिशाब्दबोधीयं विषयताषट्कं वर्त्तते, तद्यथा स्वरूपनिष्ठसंसर्गतानिरूपितसमवायत्वनिष्ठावच्छेदकतानिरूपितसमवायनिष्ठसंसर्गतानिरूपितनीलत्वनिष्ठप्रकारतानिरूपितं निरवच्छिन्नविशेष्यत्वमेकम्, निरवच्छिन्ननीलरूपवन्निष्ठविशेष्यतानिरूपितं स्वरूपनिष्ठसंसर्गतानिरूपितसमवायत्वनिष्ठावच्छेदकतानिरूपितसमवायनिष्ठसंसर्गतानिरूपितनीलत्वनिष्ठावच्छेदकतानिरूपितस्वरूपनिष्ठसंसर्गतानिरूपितसमवायत्वनिष्ठावच्छेदकतानिरूपितसमवायनिष्ठसंसर्गतानिरूपितप्रकारत्वं द्वितीयं, स्वरूपनिष्ठसंसर्गतानिरूपितसमवायत्वनिष्ठावच्छेदकतानिरूपितसमवायनिष्ठसंसर्गतानिरूपितघटत्वनिष्ठावच्छेदकतानिरूपितघटनिष्ठविशेष्यतानिरूपितं स्वरूपनिष्ठसंसर्गतानिरूपितसमवायत्वनिष्ठावच्छेदकतानिरूपितसमवायनिष्ठसंसर्गतानिरूपितनीलत्वनिष्ठावच्छेदकतानिरूपितस्वरूपनिष्ठसंसर्गतानिरूपितस्वाश्रयतादात्म्यत्वनिष्ठावच्छेदकता-रूपितस्वाश्रयतादात्म्यनिष्ठसंसर्गतानिरूपितप्रकारत्वं तृतीयं, निरवच्छिन्नघटत्वनिष्ठविशेष्यतानिरूपितं स्वरूपनिष्ठसंसर्गतानिरूपितसमवायत्वनिष्ठावच्छेदकतानिरूपितसमवायनिष्ठसंसर्गतानिरूपितनीलत्वनिष्ठावच्छेदकतानिरूपितस्वरूपनिष्ठसंसर्गतानिरूपितस्वाश्रयतादात्म्यवद्वृत्तित्वत्वनिष्ठावच्छेदकतानिरूपितस्वाश्रयतादात्म्यवद्वृत्तित्वनिष्ठसंसर्गतानिरूपितप्रकारत्वं तुरीयं, स्वरूपनिष्ठसंसर्गतानिरूपितसमवायत्वनिष्ठावच्छेदकतानिरूपितसमवायनिष्ठसंसर्गतानिरूपितघटत्वनिष्ठावच्छेदकतानिरूपितघटनिष्ठविशेष्यतानिरूपितं यत्स्वरूपनिष्ठसंसर्गतानिरूपिततादात्म्यत्वनिष्ठावच्छेदकतानिरूपिततादात्म्यनिष्ठसंसर्गतानिरूपितप्रकारत्वं तन्निरूपितं स्वरूपनिष्ठसंसर्गतानिरूपितसमवायत्वनिष्ठावच्छेदकतानिरूपितसमवायनिष्ठसंसर्गतानिरूपितनीलत्वनिष्ठावच्छेदकतानिरूपितंस्वरूपनिष्ठसंसर्गतानिरूपितसमवात्वनिष्ठावच्छेदकतानिरूपितसमवायनिष्ठसंसर्गतानिरूपितमवच्छेदकत्वं पञ्चमम्, घटत्वनिष्ठनिरवच्छिन्नविशेष्यतानिरूपितस्वरूपनिष्ठसंसर्गतानिरूपितस्वाभिन्नवृत्तित्वत्वनिष्ठावच्छेदकतानिरूपितस्वाभिन्नवृत्तित्वनिष्ठसंसर्गतानिरूपितप्रकारतानिरूपितं स्वरूपनिष्ठसंसर्गतानिरूपितसमवायत्वनिष्ठावच्छेदकतानिरूपितसमवायनिष्ठसंसर्गतानिरूपितनीलत्वनिष्ठावच्छेदकतानिरूपितस्वरूपनिष्ठसंसर्गतानिरूपितसमवायत्वनिष्ठावच्छेदकतानिरूपितसमवायनिष्ठसंसर्गतानिरूपितावच्छेदकत्वं षष्ठम्, तेषां षण्णां विषयत्वानामवच्छेद्यावच्छेदकभावः, तत्र निरवच्छिन्नविशेष्यत्वस्यावच्छेदकत्वं निरवच्छिन्ननीलरूपवन्निष्ठविशेष्यतानिरूपितप्रकारत्वे, तदवच्छेदकत्वं घटत्वावच्छिन्नविशेष्यतानिरूपितप्रकारत्वे, तदवच्छेदकत्वं निरवच्छिन्नघटत्वनिष्ठविशेष्यतानिरूपितप्रकारत्वे, तदव-

च्छेदकत्वं घटत्वावच्छिन्नविशेष्यतानिरूपितप्रकारतावच्छेदकत्वे, तदवच्छेदकत्वं निरव-
च्छिन्नघटत्वनिष्ठविशेष्यतानिरूपितप्रकारतावच्छेदकत्वे, तथाच इत्थं सम्पद्यते नीलो
घट इतिशाब्दबोधीया स्वरूपनिष्ठसंसर्गतानिरूपितसमवायत्वनिष्ठावच्छेदकतानिरूपित-
समवायनिष्ठसंसर्गतानिरूपितनीलत्वनिष्ठप्रकारतानिरूपितनिरवच्छिन्ननीलनिष्ठविशेष्य-
ता घटत्वनिष्ठनिरवच्छिन्नविशेष्यतानिरूपितस्वरूपनिष्ठसंसर्गतानिरूपितस्वाभिन्नवृत्ति-
त्वत्वनिष्ठावच्छेदकतानिरूपितस्वाभिन्नवृत्तित्वनिष्ठसंसर्गतानिरूपितप्रकारतानिरूपितं य-
त्स्वरूपनिष्ठसंसर्गतानिरूपितसमवायत्वनिष्ठावच्छेदकतानिरूपितसमवायनिष्ठसंसर्गता-
निरूपितनीलत्वनिष्ठावच्छेदकतानिरूपितं स्वरूपनिष्ठसंसर्गतानिरूपितसमवायत्वनिष्ठा-
वच्छेदकतानिरूपितसमवायनिष्ठसंसर्गतानिरूपितमवच्छेदकत्वं तन्निष्ठावच्छेदकत्वनिष्ठा-
वच्छेदकत्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकतानिरूपिता या स्वरूपनिष्ठसं-
सर्गतानिरूपसमवायत्वनिष्ठावच्छेदकतानिरूपितसमवायनिष्ठसंसर्गतानिरूपितघटत्वनिष्ठा-
वच्छेदकतानिरूपितघटनिष्ठविशेष्यत्वनिरूपितं यत्स्वरूपनिष्ठसंसर्गतानिरूपिततादात्म्य-
त्वनिष्ठावच्छेदकतानिरूपिततादात्म्यनिष्ठसंसर्गतानिरूपितप्रकारत्वं तन्निरूपितं यत्स्वरूप-
निष्ठसंसर्गतानिरूपितसमवायत्वनिष्ठ वच्छेदकतानिरूपितसमवायनिष्ठसंसर्गतानिरूपित-
नीलत्वनिष्ठावच्छेदकतानिरूपितं स्वरूपनिष्ठसंसर्गतानिरूपितसमवायत्वनिष्ठावच्छेद-
कतानिरूपितसमवायनिष्ठसंसर्गतानिरूपितमवच्छेदकत्वं तन्निष्ठावच्छेदकत्वनिष्ठावच्छे-
दकत्वनिष्ठावच्छेद कत्वनिष्ठावच्छेदकता तन्निरूपिता या निरवच्छिन्नघटत्वनिष्ठविशेष्य-
तानिरूपितं यत्स्वरूपनिष्ठसंसर्गतानिरूपितसमवायत्वनिष्ठावच्छेदकतानिरूपितसमवाय-
निष्ठसंसर्गतानिरूपितनीलत्वनिष्ठावच्छेदकतानिरूपितस्वरूपनिष्ठसंसर्गतानिरूपितस्वा-
श्रयतादात्म्यवद्वृत्तित्वत्वनिष्ठावच्छेदकतानिरूपितस्वाश्रयतादात्म्यवद्वृत्तित्वनिष्ठसंसर्गता-
निरूपितप्रकारत्वं तन्निष्ठावच्छेद कत्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकता तन्निरूपिता या
स्वरूपनिष्ठसंसर्गतानिरूपितसमवायत्वनिष्ठावच्छेदकतानिरूपितसमवायनिष्ठसंसर्गता-
निरूपितघटत्वनिष्ठावच्छेदकतानिरूपितघटनिष्ठविशेष्यतानिरूपितं यत्स्वरूपनिष्ठसंस-
र्गतानिरूपितसमवायत्वनिष्ठावच्छेदकतानिरूपितसमवायनिष्ठसंसर्गतानिरूपितनीलत्व-
निष्ठावच्छेदकतानिरूपितस्वरूपनिष्ठसंसर्गतानिरूपितस्वाश्रयतादात्म्यत्वनिष्ठावच्छेदकता-
निरूपितस्वाश्रयतादात्म्यनिष्ठसंसर्गतानिरूपितप्रकारत्वं तन्निष्ठावच्छेदकत्वनिष्ठावच्छेद-
कता तन्निरूपिता या निरवच्छिन्ननीलरूपवन्निष्ठविशेष्यतानिरूपितं यत्स्वरूपनिष्ठसंस-
र्गतानिरूपितसमवायत्वनिष्ठावच्छेदकतानिरूपितसमवायनिष्ठसंसर्गतानिरूपित नीलत्व-
निष्ठावच्छेदकतानिरूपितस्वरूपनिष्ठसंसर्गतानिरूपितसमवायत्वनिष्ठावच्छेदकतानिरू-

पितसमवायनिष्ठसंसर्गतानिरूपितप्रकारत्वं तन्निष्ठावच्छेदकता तन्निरूपिता, तादृश-
निरवच्छिन्नविशेष्यतानिरूपको नीलो घट इति शाब्दबोधः। नीलत्वे च नीलो घट
इतिशाब्दबोधीयं विषयत्वषट्कम्। तद्यथा निरवच्छिन्ननीलनिष्ठविशेष्यतानिरूपितं
स्वरूपनिष्ठसंसर्गतानिरूपितसमवायत्वनिष्ठावच्छेदकतानिरूपितसमवायनिष्ठसंसर्गता-
निरूपितप्रकारत्वमेकम्, निरवच्छिन्ननीलरूपवन्निष्ठविशेष्यतानिरूपितस्वरूपनिष्ठसंस-
र्गतानिरूपितसमवायत्वनिष्ठावच्छेदकतानिरूपितसमवायनिष्ठसंसर्गतानिनिरूपितनील-
निष्ठप्रकारतानिरूपितं स्वरूपनिष्ठसंसर्गतानिरूपितसमवायत्वनिष्ठावच्छेदकतानिरूपित-
समवायनिष्ठसंसर्गतानिरूपितावच्छेदकत्वं द्वितीयम्, स्वरूपनिष्ठसंसर्गतानिरूपितसम-
वायत्वनिष्ठावच्छेदकतानिरूपितसमवायनिष्ठसंसर्गतानिरूपितघटत्वनिष्ठावच्छेदकता-
निरूपितघटनिष्ठविशेष्यतानिरूपितस्वरूपनिष्ठसंसर्गतानिरूपितस्वाश्रयतादात्म्यत्वनिष्ठा-
वच्छेदकतानिरूपितस्वाश्रयतादत्म्यनिष्ठसंसर्गतानिरूपितनीलनिष्ठप्रकारतानिरूपितं स्व-
रूपनिष्ठसंसर्गतानिरूपितसमवायत्वनिष्ठावच्छेदकतानिरूपितसमवायनिष्ठसंसर्गतानिरू-
पितावच्छेदकत्वं तृतीयम्, निरवच्छिन्नघटत्वनिष्ठविशेष्यतानिरूपितस्वरूपनिष्ठसंस-
र्गतानिरूपितस्वाश्रयतादात्म्यवद्वृत्तित्वत्वनिष्ठावच्छेदकतानिरूपितस्वाश्रयतादात्म्यवद्वृ-
त्तित्वनिष्ठसंसर्गतानिरूपितप्रकारतानिरूपितं स्वरूपनिष्ठसंसर्गतानिरूपितसमवायत्व-
निष्ठावच्छेदकतानिरूपितसमवायनिष्ठसंसर्गतानिरूपितावच्छेदकत्वं चतुर्थम्, स्वरूप-
निष्ठसंसर्गतानिरूपितसमवायत्वनिष्ठावच्छेदकतानिरूपितसमवायनिष्ठसंसर्गतानिरू-
पितघटत्वनिष्ठावच्छेदकतानिरूपितघटनिष्ठविशेष्यतानिरूपितस्वरूपनिष्ठसंसर्गतानिरूपित-
तादात्म्यत्वनिष्ठावच्छेदकतानिरूपिततादात्म्यनिष्ठसंसर्गतानिरूपितप्रकारतानिरूपिनस्व-
रूपनिष्ठसंसर्गतानिरूपितसमवायत्वनिष्ठावच्छेदकतानिरूपितसमवायनिष्ठसंसर्गतानि-
रूपितावच्छेदकतानिरूपितं स्वरूपनिष्ठसंसर्गतानिरूपितसमवायत्वनिष्ठावच्छेदकतानि-
रूपितसमवायनिष्ठसंसर्गतानिरूपितमवच्छेदकत्वं पञ्चमम्, घटत्वनिष्ठनिरवच्छिन्न-
विशेष्यतानिरूपितस्वरूपनिष्ठसंसर्गतानिरूपितस्वाभिन्नवृत्तित्वत्वनिष्ठावच्छेदकतानिरू-
पितस्वाभिन्नवृत्तित्वनिष्ठसंसर्गतानिरूपितप्रकारतानिरूपितस्वरूपनिष्ठसंसर्गतानिरूपित-
समवायत्वनिष्ठावच्छेदकतानिरूपितसमवायनिष्ठसंसर्गतानिरूपितावच्छेदकतानिरू-
पितं स्वरूपनिष्ठसंसर्गतानिरूपितसमवायत्वनिष्ठावच्छेदकतानिरूपितसमवायनिष्ठसं-
सर्गतानिरूपितावच्छेदकत्वं षष्ठम्, षण्णाञ्चैतेषामवच्छेद्यावच्छेदकभावः, तत्र प्रथम-
स्यावच्छेद्यत्वे तदवच्छेदकत्वं द्वितीयस्य तदवच्छेदकत्वं तृतीयस्येत्येवंक्रमेण विवक्षायां
यत्सम्पद्यते तत्प्रदर्श्यते, निरवच्छिन्ननीलनिष्ठविशेष्यतानिरूपितस्वरूपनिष्ठसंसर्गता-

निरूपितसमवायत्वनिष्ठावच्छेदकतानिरूपितसमवायनिष्ठसंसर्गतानिरूपितनीलत्वनिष्ठ-
प्रकारता घटत्वनिष्ठनिरवच्छिन्नविशेष्यतानिरूपितस्वरूपनिष्ठसंसर्गतानिरूपितस्वाभिन्न-
वृत्तित्वत्वनिष्ठावच्छेदकतानिरूपितस्वाभिन्नवृत्तित्वनिष्ठसंसर्गतानिरूपितप्रकारतानिरूपि-
तस्वरूपनिष्ठसंसर्गतानिरूपितसमवायत्वनिष्ठावच्छेदकतानिरूपितसमवायनिष्ठसंसर्गता-
निरूपितावच्छेदकतानिरूपितं यत्स्वरूपनिष्ठसंसर्गतानिरूपितसमवायत्वनिष्ठावच्छेदकता-
निरूपितसमवायनिष्ठसंसर्गतानिरूपितमवच्छेदकत्वं तन्निष्ठावच्छेदकत्वनिष्ठावच्छेदकत्व-
निष्ठावच्छेदकत्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकतानिरूपिता या स्वरूपनिष्ठसंसर्गता-
निरूपितसमवायत्वनिष्ठावच्छेदकतानिरूपितसमवायनिष्ठसंसर्गतानिरूपितघटत्वनिष्ठा-
वच्छेदकतानिरूपितघटनिष्ठविशेष्यतानिरूपितस्वरूपनिष्ठसंसर्गतानिरूपिततादात्म्यत्व-
निष्ठावच्छेदकतानिरूपिततादात्म्यनिष्ठसंसर्गतानिरूपितप्रकारतानिरूपितस्वरूपनिष्ठसंस
र्गतानिरूपितसमवायत्वनिष्ठावच्छेदकतानिरूपितसमवायनिष्ठसंसर्गतानिरूपितावच्छे-
दकतानिरूपितं यत्स्वरूपनिष्ठसंसर्गतानिरूपितसमवायत्वनिष्ठावच्छेदकतानिरूपितसम-
वायनिष्ठसंसर्गतानिरूपितमवच्छेदकत्वं तन्निष्ठावच्छेदकत्वनिष्ठावच्छेदकत्वनिष्ठावच्छेद-
कत्वनिष्ठावच्छेदकता तन्निरूपिता या निरवच्छिन्नघटत्वनिष्ठविशेष्यतानिरूपितस्वरूप-
निष्ठसंसर्गतानिरूपितस्वाश्रयतादात्म्यवद्वृत्तित्वत्वनिष्ठावच्छेदकतानिरूपितस्वाश्रयतादा-
त्म्यवद्वृत्तित्वनिष्ठसंसर्गतानिरूपितप्रकारतानिरूपितं यत्स्वरूपनिष्ठसंसर्गतानिरूपितसम-
वायत्वनिष्ठावच्छेदकतानिरूपितसमवायनिष्ठसंसर्गतानिरूपितमवच्छेदकत्वं तन्निष्ठा-
वच्छेदकत्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकता तन्निरूपिता या स्वरूपनिष्ठसंसर्गता-
निरूपितसमवायत्वनिष्ठावच्छेदकतानिरूपितसमवायनिष्ठसंसर्गतानिरूपितघटत्वनिष्ठा-
वच्छेदकतानिरूपितघटनिष्ठविशेष्यतानिरूपितस्वरूपनिष्ठसंसर्गतानिरूपितस्वाश्रयतादा-
त्म्यत्वनिष्ठावच्छेदकतानिरूपितस्वाश्रयतादात्म्यनिष्ठसंसर्गतानिरूपितनीलनिष्ठप्रका-
रतानिरूपितं यत्स्वरूपनिष्ठसंसर्गतानिरूपितसमवायत्वनिष्ठावच्छेदकतानिरूपितसमवा-
यनिष्ठसंसर्गतानिरूपितावच्छेदकत्वं तन्निष्ठावच्छेदकत्वनिष्ठावच्छेकता तन्निरूपिता
या निरवच्छिन्ननीलरूपत्वनिष्ठविशेष्यतानिरूपितस्वरूपनिष्ठसंसर्गतानिरूपितसमवाय-
त्वनिष्ठावच्छेदकतानिरूपितसमवायनिष्ठसंसर्गतानिरूपितनीलनिष्ठप्रकारतानिरूपितं
यत्स्वरूपनिष्ठसंसर्गतानिरूपितसमवायत्वनिष्ठावच्छेदकतानिरूपितसमवायनिष्ठसंस-
र्गतानिरूपितावच्छेदकत्वं तन्निष्ठावच्छेदकतानिरूपिता, तादृशप्रकारतानिरूपको नीलो
घट इति शाब्दबोधः। संसर्गतया भासमाने समवाये च नीलो घट इति शाब्दबोधनिरू-
पिताः पञ्चदश विषयताः, तत्र सप्त नीलत्वसंसर्गतया भासमाने, चतस्रो नीलसंसर्गतया

त्वनिष्ठावच्छेदकतानिरूपितसमवायनिष्ठसंसर्गतानिरूपितनीलनिष्ठावच्छेदकतानिरू-
पितस्वरूपनिष्ठसंसर्गतानिरूपितस्वाभिन्नवृत्तित्वत्वनिष्ठावच्छेदकतानिरूपितस्वाभिन्न-
वृत्तित्वनिष्ठसंसर्गतानिरूपितनीलत्वन्निष्ठप्रकारतानिरूपितनिरवच्छिन्नघटत्वनिष्ठविशे-
ष्यत्वावच्छेद्यस्वरूपनिष्ठसंसर्गतानिरूपितसमवायत्वनिष्ठावच्छेदकतानिरूपितसमवाय-
निष्ठसंसर्गतानिरूपितनीलत्वनिष्ठावच्छेदकतानिरूपितस्वरूपनिष्ठसंसर्गतानिरूपितस्वा-
श्रयतादात्म्यत्वनिष्ठावच्छेदकतानिरूपितस्वाश्रयतादात्म्यनिष्ठसंसर्गतानिरूपितनीलनिष्ठ-
प्रकारत्वनिरूपितघटनिष्ठविशेष्यतानिरूपकस्वरूपनिष्ठसंसर्गतानिरूपितसमवायत्वनिष्ठा-
वच्छेदकतानिरूपितसमवायनिष्ठसंसर्गतानिरूपितघटत्वनिष्ठावच्छेदकत्वावच्छेद्यनिर-
वच्छिन्नघटनिष्ठविशेष्यतानिरूपितस्वरूपनिष्ठसंसर्गतानिरूपितसमवायत्वनिष्ठावच्छेद-
कतानिरूपितसमवायनिष्ठसंसर्गतानिरूपितघटत्वनिष्ठप्रकारत्वावच्छेद्यघटत्वनिष्ठावच्छे-
दकतानिरूपितस्वरूपनिष्ठसंसर्गतानिरूपितसमवायत्वनिष्ठावच्छेदकतानिरूपितसमवाय-
निष्ठसंसर्गतानिरूपितघटत्वनिष्ठप्रकारतानिरूपितनिरवच्छिन्नघटनिष्ठविशेष्यत्वावच्छेद्य-
स्वरूपनिष्ठसंसर्गतानिरूपितसमवायत्वनिष्ठावच्छेदकतानिरूपितसमवायनिष्ठसंसर्गता-
निरूपितनीलत्वनिष्ठावच्छेदकतानिरूपितस्वरूपनिष्ठसंसर्गतानिरूपितस्वाश्रयतादात्म्य-
त्वनिष्ठावच्छेदकतानिरूपितस्वाश्रयतादात्म्यनिष्ठसंसर्गतानिरूपितनीलनिष्ठप्रकारतानिरू-
पितस्वरूपनिष्ठसंसर्गतानिरूपितसमवायत्वनिष्ठावच्छेदकतानिरूपितसमवायनिष्ठसंसर्ग-
तानिरूपितघटत्वनिष्ठावच्छेदकतानिरूपितघटनिष्ठविशेष्यत्वावच्छेद्यघटनिष्ठविशेष्यता-
निरूपको नीलो घट इतिशाब्दबोधः। अनन्तरप्रदर्शितशाब्दबोधाकारेऽवच्छेद्यावच्छे-
दकभावेन विषयता यथा सन्निवेशितास्तथैव क्रममाश्रित्य तन्निष्ठावच्छेदकत्वादिपरम्परा-
श्रयणेन त्रितलावच्छेदकतादिघटितो बोधप्रकारश्चरम इदानीमुद्भाव्यते, अस्य प्रथमत
एवाऽभिधाने कथम्भावाकाङ्क्षाऽनिवारितप्रसरैव स्यात्ततः शिष्यबुद्धिव्याक्षेपोऽनर्थायैव
स्यात्, तथाहि, स्वरूपनिष्ठसंसर्गत्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकत्व-
निष्ठावच्छेदकत्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकतानिरूपितस्वरूपनिष्ठसंसर्गत्वनिष्ठावच्छे
दकत्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकतानिरूपितस्वरू-
पनिष्ठसंसर्गत्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकतानिरूपि-
तस्वरूपनिष्ठसंसर्गत्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकतानिरूपितस्वरूप-
निष्ठसंसर्गत्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकतानिरूपितस्वरूपनिष्ठसंसर्गत्वनिष्ठावच्छेद-
कतानिरूपितस्वरूपनिष्ठसंसर्गतानिरूपितसमवायत्वनिष्ठविशेषणत्वनिष्ठावच्छेदकत्वनि-
ष्ठावच्छेदकत्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकतानिरू-

पितसमवायत्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकत्वनि-
ष्ठावच्छेदकत्वनिष्ठावच्छेदकतानिरूपितसमवायत्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकत्व-
निष्ठावच्छेदकत्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकतानिरूपितसमवायत्वनिष्ठावच्छेदकत्व-
निष्ठावच्छेदकत्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकतानिरूपितसमवायत्वनिष्ठावच्छेदकत्व-
निष्ठावच्छेदकत्वनिष्ठावच्छेदकतानिरूपितसमवायत्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकता-
निरूपितसमवायत्वनिष्ठावच्छेदकतानिरूपितसमवायनिष्ठविशेष्यत्वनिष्ठावच्छेदकत्वनि-
ष्ठावच्छेदकत्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकतानिरू-
पितसमवायनिष्ठसंसर्गत्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकत्वनिष्ठावच्छे-
दकत्वनिष्ठावच्छदकतानिरूपितसमवायनिष्ठसंसर्गत्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकत्व-
निष्ठावच्छेदकत्वनिष्ठावच्छेदकतानिरूपितसमवायनिष्ठसंसर्गत्वनिष्ठावच्छेदकत्वनिष्ठा-
वच्छेदकत्वनिष्ठावच्छेदकतानिरूपितसमवायनिष्ठसंसर्गत्वनिष्ठावच्छेदकत्वनिष्ठावच्छे-
दकतानिरूपितसमवायनिष्ठसंसर्गत्वनिष्ठावच्छेदकतानिरूपितसमवायनिष्ठसंसर्गतानिरू-
पितनीलत्वनिष्ठप्रकारत्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकत्वनिष्ठावच्छे-
दकत्वनिष्ठावच्छेदकतानिरूपितनीलत्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकत्वनिष्ठावच्छेद-
कत्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकतानिरूपितनीलत्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदक-
त्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकतानिरूपितनीलत्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकत्व-
निष्ठावच्छेदकतानिरूपितनीलत्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकतानिरूपितनीलत्वनिष्ठा-
वच्छेदकतानिरूपिता स्वरूपनिष्ठसंसर्गत्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकत्वनिष्ठावच्छे-
दकतानिरूपितस्वरूपनिष्ठसंसर्गत्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकतानिरूपितस्वरूपनिष्ठ-
संसर्गत्वनिष्ठावच्छेदकतानिरूपितस्वरूपनिष्ठसंसर्गतानिरूपितसमवायत्वनिष्ठविशेषणत्व-
निष्ठावच्छेदकत्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकतानिरूपितसमवायत्वनिष्ठावच्छेदक-
त्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकतानिरूपितसमवायत्वनिष्ठावच्छेदकत्वनिष्ठावच्छेद-
कतानिरूपितसमवायत्वनिष्ठावच्छेदकतानिरूपितसमवायनिष्ठविशेष्यत्वनिष्ठावच्छेदक-
त्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकतानिरूपितसमवायनिष्ठसंसर्गत्वनिष्ठावच्छेदकत्वनि-
ष्ठावच्छेदकतानिरूपितसमवायनिष्ठसंसर्गत्वनिष्ठावच्छेदकतानिरूपितसमवायनिष्ठसंस-
र्गतानिरूपिता स्वरूपनिष्ठसंसर्गत्वनिष्ठावच्छेदकतानिरूपितस्वरूपनिष्ठसंसर्गतानिरूपित-
स्वाश्रयाभिन्नवृत्तित्वत्वनिष्ठविशेषणत्वनिष्ठावच्छेदकतानिरूपितस्वाश्रयाभिन्नवृत्तित्वत्व-
निष्ठावच्छेदकतानिरूपितस्वाश्रयाभिन्नवृत्तित्वनिष्ठविशेष्यत्वनिष्ठावच्छेदकतानिरूपित-
स्वाश्रयाभिन्नवृत्तित्वनिष्ठसंसर्गतानिरूपितनीलनिष्ठप्रकारत्वनिष्ठावच्छेदकत्वनिष्ठावच्छे-

दकत्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकतानिरूपितस्वरूपनिष्ठसंसर्गत्व-
निष्ठावच्छेदकतानिरूपितस्वरूपनिष्ठसंसर्गतानिरूपितस्वाश्रयतादात्म्यत्वनिष्ठविशेषणत्व-
निष्ठावच्छेदकतानिरूपितस्वाश्रयतादात्म्यत्वनिष्ठावच्छेदकतानिरूपितस्वाश्रयतादात्म्य-
निष्ठविशेष्यत्वनिष्ठावच्छेदकतानिरूपितस्वाश्रयतादात्म्यनिष्ठसंसर्गतानिरूपितनीलनिष्ठ-
प्रकारत्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकतानिरूपितनि-
रवच्छिन्ननीलनिष्ठविशेष्यत्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकतानिरूपि-
तनिरवच्छिन्ननीलवन्निष्ठविशेष्यतानिरूपितनीलनिष्ठप्रकारत्वनिष्ठावच्छेदकत्वनिष्ठाव-
च्छेदकतानिरूपितनीलनिष्ठावच्छेदकत्वनिष्ठावच्छेदकतानिरूपिता नीलनिष्ठावच्छेद-
कता तन्निरूपिता निरवच्छिन्ननीलवन्निष्ठविशेष्यत्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकता-
निरूपितस्वरूपनिष्ठसंसर्गत्वनिष्ठावच्छेदकतानिरूपितस्वरूपनिष्ठसंसर्गतानिरूपितस्वा-
भिन्नवृत्तित्वत्वनिष्ठविशेषणत्वनिष्ठावच्छेदकतानिरूपितस्वाभिन्नवृत्तित्वत्वनिष्ठावच्छेदक-
तानिरूपितस्वाभिन्नवृत्तित्वनिष्ठविशेष्यत्वनिष्ठावच्छेदकतानिरूपितस्वाभिन्नवृत्तित्वनिष्ठ-
संसर्गतानिरूपितनीलवन्निष्ठप्रकारत्वनिष्ठावच्छेदकतानिरूपितस्वरूपनिष्ठसंसर्गत्वनिष्ठा-
वच्छेदकतानिरूपितस्वरूपनिष्ठसंसर्गतानिरूपिततादात्म्यत्वनिष्ठविशेषणत्वनिष्ठावच्छे-
दकतानिरूपिततादात्म्यत्वनिष्ठावच्छेदकतानिरूपिततादात्म्यनिष्ठविशेष्यत्वनिष्ठावच्छेद-
कतानिरूपिततादात्म्यनिष्ठसंसर्गतानिरूपितनीलवन्निष्ठप्रकारता तन्निरूपिता स्वरूपनिष्ठ-
संसर्गत्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकतानिरूपितस्वरूपनिष्ठसंसर्गत्व-
निष्ठावच्छेदकत्वनिष्ठावच्छेदकतानिरूपितस्वरूपनिष्ठसंसर्गत्वनिष्ठावच्छेदकतानिरूपित-
स्वरूपनिष्ठसंसर्गतानिरूपितसमवायत्वनिष्ठविशेषणत्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदक-
त्वनिष्ठावच्छेदकतानिरूपितसमवायत्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदक-
तानिरूपितसमवायत्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकतानिरूपितसमवायत्वनिष्ठावच्छे-
दकतानिरूपितसमवायनिष्ठविशेष्यत्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदक-
तानिरूपितसमवायनिष्ठसंसर्गत्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकतानिरूपितसमवायनिष्ठ-
संसर्गत्वनिष्ठावच्छेदकतानिरूपितसमवायनिष्ठसंसर्गतानिरूपिता या निरवच्छिन्नघटत्व-
निष्ठविशेष्यत्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकतानिरू-
पितनिरवच्छिन्नघटत्वनिष्ठविशेष्यत्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदक-
तानिरूपितघटत्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकतानिरूपितघटत्वनिष्ठ-
प्रकारत्वनिष्ठावच्छेदकतानिरूपिता घटत्वनिष्ठावच्छेदकता तन्निरूपिता घटनिष्ठनिरव-
च्छिन्नविशेष्यत्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकतानिरूपितघटनिष्ठविशेष्यत्वनिष्ठावच्छे-

दकतानिरूपिताघटनिष्ठविशेष्यता तन्निरूपको नीलो घट इतिशाब्दबोधः। अत्र तद्धर्म्म-विशिष्टस्य यत्राऽन्वयस्तद्धर्म्मस्याऽपि तत्राऽन्वय इतिनियमात् नीलत्वविशिष्टस्य नीलस्य नीलवति समवायेनाऽन्वये नीलत्वस्यापि स्वाश्रयवत्त्वेनाऽन्वयः, एवं घटे स्वाश्रयतादात्म्येन नीलस्यान्वये स्वाश्रयाश्रयतादात्म्येन नीलत्वस्याऽन्वयः, तथा घटत्वे स्वाश्रयाभिन्न-वृत्तित्वेन नीलस्याऽन्वये नीलत्वस्यापि स्वाश्रयाश्रयाभिन्नवृत्तित्वेनाऽन्वय इतिपूर्वोपदर्शित-विषयताषट्कादधिकं विषयतात्रयं नीलत्वे, नीलवृत्ति चाऽधिकमेकं विषयत्वं, घटे चैकम्, घटत्वे चैकं निरवच्छिन्नं विशेष्यत्वम्, अपरं नीलत्वनिष्ठप्रकारतानिरूपितघटनिष्ठविशे-ष्यतानिरूपितमवच्छेदकत्वम्, तन्निरूपितं संसर्गत्वं समवाये, तन्निरूपितमवच्छेदकत्वं समवायत्वे, तन्निरूपितं संसर्गत्वं स्वरूपे, तथा नीलत्वस्य संसर्गे एकस्मिन् स्वाश्रयवत्त्वे विषयताद्वयं विशेष्यत्वं संसर्गत्वञ्च, तत्संसर्गतावच्छेदके स्वाश्रयवत्त्वत्वे विशेषणत्वमव-च्छेदकत्वञ्च, संसर्गतावच्छेदकावच्छेदके स्वरूपे संसर्गताद्वयं, नीलत्वस्य द्वितीयसंसर्गे स्वाश्रयवत्तादात्म्ये पूर्ववद्विषयताद्वयम्, एवं संसर्गतावच्छेदके तदवच्छेदके च, तथा तृतीये च स्वाश्रयाश्रयाभिन्नवृत्तित्वे, तदवच्छेदके, तदवच्छेदके चेत्येवमष्टाविंशतिर्विष-यताः, तासां द्विनवतिविषयताभिस्सह सम्मेलने विंशत्यधिकशतं विषयता नीलो घट इति बोधनिरूपिताः प्रत्येतव्याः। नन्वष्टाविंशतिसंख्याकानामेतासां प्रथममनुपदर्शने तत्परि-चयावेदकोल्लेखप्रकारागुम्फनलाघवमेव बीजम्, परमिदानीं शिष्यबुद्धिवैशद्यतायां स्वत एव तद्गुम्फनस्फूर्त्तावपि कथं कुत्र चोक्तविषयत्वनिष्ठावच्छेदकतापरम्परा चरमबोधे सन्निवेशनीयेत्याकाङ्क्षा बुद्धिक्षोभायैव सम्पन्नेति चेन्मैवम्, यतो निरवच्छिन्ननीलनिष्ठ-विशेष्यतानिरूपितनीलत्वनिष्ठप्रकारतावच्छेदकतया स्वाश्रयवत्त्वसंबन्धावच्छिन्ननील-त्वनिष्ठप्रकारत्वस्य तदवच्छेदकतया स्वाश्रयाश्रयतादात्म्यसम्बन्धावच्छिन्ननीलत्वनिष्ठ-प्रकारत्वस्य तदवच्छेदकतया स्वाश्रयाश्रयाभिन्नवृत्तित्वसम्बन्धावच्छिन्नप्रकारत्वस्य नि-वेशः, तथासति स्वरूपनिष्ठसंसर्गत्वनिष्ठावच्छेदकतानिरूपितस्वरूपनिष्ठसंसर्गतानिरूपि-तस्वाश्रयाश्रयाभिन्नवृत्तित्वत्वनिष्ठविशेषणत्वनिष्ठावच्छेदकतानिरूपितस्वाश्रयाश्रयाभिन्न-वृत्तित्वत्वनिष्ठावच्छेदकतानिरूपितस्वाश्रयाश्रयाभिन्नवृत्तित्वनिष्ठविशेष्यत्वनिष्ठावच्छेद-कतानिरूपितस्वाश्रयाश्रयाभिन्नवृत्तित्वनिष्ठसंसर्गतानिरूपितनीलत्वनिष्ठप्रकारत्वनिष्ठाव-च्छेदकत्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकत्वनिष्ठाव-च्छेदकत्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकतानिरूपितस्वरूपनिष्ठसंसर्गत्वनिष्ठावच्छेद-कतानिरूपितस्वरूपनिष्ठसंसर्गतानिरूपितस्वाश्रयाश्रयतादात्म्यत्वनिष्ठविशेषणत्वनिष्ठा-वच्छेदकतानिरूपितस्वाश्रयाश्रयतादात्म्यत्वनिष्ठावच्छेदकतानिरूपितस्वाश्रयाश्रयतादा-

त्म्यनिष्ठविशेष्यत्वनिष्ठावच्छेदकतानिरूपितस्वाश्रयाश्रयतादात्म्यनिष्ठसंसर्गतानिरूपित-
नीलत्वनिष्ठप्रकारत्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदक-
त्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकतानिरूपितस्वरूपनिष्ठसंसर्गत्वनिष्ठा-
वच्छेदकतानिरूपितस्वरूपनिष्ठसंसर्गतानिरूपितस्वाश्रयवत्त्वत्वनिष्ठविशेषणत्वनिष्ठाव-
च्छेदकतानिरूपितस्वाश्रयवत्त्वत्वनिष्ठावच्छेदकतानिरूपितस्वाश्रयवत्त्वनिष्ठविशेष्यत्व-
निष्ठावच्छेदकतानिरूपितस्वाश्रयवत्त्वनिष्ठसंसर्गतानिरूपितनीलत्वनिष्ठप्रकारत्वनिष्ठाव-
च्छेदकत्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकत्वनिष्ठाव-
च्छेदकतानिरूपितेत्येतावदधिकं निरवच्छिन्ननीलनिष्ठविशेष्यतानिरूपितनीलत्वनिष्ठ-
प्रकारत्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकत्वनिष्ठावच्छे-
दकतातः प्राङ्निवेशनीयम्, नीलनिष्ठप्रकारतानिरूपितनिरवच्छिन्ननीलवन्निष्ठविशेष्य-
ताया अवच्छेदकतया नीलत्वनिष्ठप्रकारतानिरूपितनिरवच्छिन्ननीलवन्निष्ठविशेष्यतायाः
प्रवेशे निरवच्छिन्ननीलवन्निष्ठविशेष्यत्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकतेत्यतः प्राङ्निवे-
शनीयम, घटनिष्ठनिरवच्छिन्नविशेष्यतावच्छेदकतया नीलत्वनिष्ठप्रकारतानिरूपितघट-
निष्ठविशेष्यतायाः प्रवेशे प्रथमन्तत्र नीलत्वनिष्ठप्रकारतानिरूपितघटनिष्ठविशेष्यत्वनिष्ठा-
वच्छेदकत्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकतानिरूपितेतिनिवेशनीयम्, एवं स्वरूपनिष्ठ
संसर्गत्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकतानिरूपितेति
समवायत्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकत्वनिष्ठाव-
च्छेदकतानिरूपितेति समवायनिष्ठसंसर्गत्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकत्वनिष्ठावच्छे-
दकत्वनिष्ठावच्छेदकतानिरूपितेति घटत्वनिष्ठविशेष्यत्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदक-
त्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकतानिरूपितेति च प्रथमतः तत्तत्स्थाने
निवेशनीयम्। अत्र न केवलं प्रकृतिः प्रयोक्तव्या नापि प्रत्यय इति प्रत्ययसहिताया एव
प्रकृतेः प्रयोक्तव्यत्वे प्रत्ययस्य सार्थकत्वे निरर्थकत्वस्यान्याय्यतया प्रत्ययार्थस्यावश्यंविव-
क्षितत्वे प्रत्ययानां प्रकृत्यर्थान्वितस्वार्थबोधकत्वनियमेन प्रत्ययार्थस्य प्रकृत्यर्थेन सहैवा-
न्वय इति स्थितौ विभक्त्यर्थकर्मत्वादेः प्रकृत्यर्थविशेष्यत्वेऽपि विभक्त्यर्थसंख्यायाः प्रकृ-
त्यर्थप्रकारत्वमेवेत्यतो नीलो घट इत्यादौ घटे सुवर्थस्यैकत्वस्य प्रकारतया भानमावश्य-
कम्, तथाच तत्रापि विषयताचतुष्टयम्, एकं घटत्वावच्छिन्नविशेष्यतानिरूपितप्रकारत्वं,
द्वितीयं निरवच्छिन्नघटत्वनिष्ठविशेष्यतानिरूपितप्रकारत्वं, तृतीयं विशेष्यतावच्छेदकत्वं,
तुरीयं निरवच्छिन्नविशेष्यत्वम्, एवं सति एकत्वत्वे विषयताषट्कम्, द्वे प्रकारतावच्छेद-
कत्वे, त्रीणि प्रकारत्वानि, एकं च विशेष्यतावच्छेदकतावच्छेदकत्वम, तथासति

घटेऽपि पूर्वदर्शितविषयतातोऽधिकं विषयताद्वयम्, एकं एकत्वनिष्ठप्रकारतानिरूपित-विशेष्यत्वम्, द्वितीयं एकत्वत्वनिष्ठप्रकारतानिरूपितविशेष्यत्वम्, घटत्वे पूर्वदर्शितवि-षयतातोऽधिकं विषयताचतुष्टयम्, द्वे विशेष्यतावच्छेदकत्वे, एकमेकत्वनिष्ठप्रकारता-निरूपितविशेष्यत्वम्, एकञ्चैकत्वत्वनिष्ठप्रकारतानिरूपितविशेष्यत्वम्, घटत्वसंसर्ग-समवाये च द्वे घटत्वगतावच्छेदकताद्वयनिरूपितसंसर्गत्वे पूर्वोक्तादधिके, समवायत्वेऽपि द्वे पूर्वोक्तादधिके संसर्गतावच्छेदकत्वे, एवं स्वरूपेऽपि द्वे संसर्गतावच्छेदकतानिरूपित-संसर्गते पूर्वोक्तादधिके, एकत्वसंसर्गे समवाये एकं प्रकारतानिरूपितसंसर्गत्वं, द्वितीयं विशेष्यतावच्छेदकतानिरूपितसंसर्गत्वं, तृतीयं समवायत्वनिष्ठविशेषणतानिरूपितवि-शेष्यत्वमित्येवं विषयतात्रयं, तथा तत्संसर्गतावच्छेदकसमवायत्वेऽपि विषयतात्रयम्, एवं तत्संसर्गतावच्छेदकतावच्छेदकस्वरूपेऽपि विषयतात्रयम्, तथा घटत्वे पारतन्त्र्येण प्रकारीभूतैकत्वसंसर्गे स्वाश्रयवृत्तित्वे विषयताद्वयमेकं संसर्गत्वं, द्वितीयं विशेष्यत्वम्, तत्सं-सर्गतावच्छेदके स्वाश्रयवृत्तित्वत्वेऽपि विषयताद्वयम्, एकं विशेषणत्वम्, द्वितीयमवच्छे-दकत्वम्, तत्संसर्गतावच्छेदकतावच्छेदके स्वरूपेऽपि द्विविधं संसर्गत्वं, एकत्वत्वसंसर्गे च समवाये पञ्चविषयत्वानि, एकं निरवच्छिन्नैकत्वनिष्ठविशेष्यतानिरूपितप्रकारतानिरू-पितसंसर्गत्वं, द्वितीयं घटनिष्ठविशेष्यतानिरूपितैकत्वनिष्ठप्रकारतानिरूपितावच्छेदकता-निरूपितसंसर्गत्वम्, तृतीयं घटत्वनिष्ठविशेष्यतानिरूपितैकत्वनिष्ठप्रकारतानिरूपिताव-च्छेदकतानिरूपितसंसर्गत्वम्, तुरीयं नीलवन्निष्ठप्रकारतानिरूपितविशेष्यतानिरूपिता-वच्छेदकतानिरूपितावच्छेदकतानिरूपितसंसर्गत्वम्, पञ्चमं समवायत्वनिष्ठविशेषण-तानिरूपितविशेष्यत्वम्, समवायत्वेऽपि एकत्वत्वसंसर्गतावच्छेदके पञ्च विषयताः, तत्रैका विशेषणतारूपा, अन्याश्च-संसर्गतावच्छेदकतारूपाः, तत्संसर्गतावच्छेदकताव-च्छेदकस्वरूपे च संसर्गत्वाख्या पञ्च विषयताः, घटे एकत्वत्वस्य संसर्गे स्वाश्रयवत्त्वे द्विविधं विषयत्वं, संसर्गत्वमेकम्, विशेष्यत्वञ्चैकम्, स्वाश्रयवत्त्वत्वे च द्वे विषयत्वे एकं विशेषणत्वं द्वितीयमवच्छेदकत्वं, तत्स्वरूपे च संसर्गताद्वयम्, एवं घटत्वे एकत्व-त्वस्य भासमानसंसर्गे च स्वाश्रयाश्रयवृत्तित्वे द्वे विषयते, एका संसर्गता, द्वितीया विशे-ष्यता, स्वाश्रयाश्रयवृत्तित्वत्वेऽपि विषयत्वद्वयम्, एकं विशेषणत्वम्, द्वितीयमवच्छेद-कत्वम्, तदवच्छेदकस्वरूपे संसर्गताद्वयम्, इत्थञ्च सुबर्थैकत्वभाननिबन्धना विषयता-श्चतुःषष्टिसंख्यकाः, तासाञ्च विंशोत्तरशतविषयताभिस्सह मेलने चतुरशीत्युत्तरशतसं-ख्यका विषयता नीलोघट इति बोधनिरूपिता भवन्ति, अनन्तराभिहितानां चतुःषष्टि-विषयतानां मध्ये यासामवच्छेद्यावच्छेदकभावो भवति यथा च यत्र सन्निवेशो युक्त-

स्तथा च सति यादृशो बोधः सम्पद्यते तथा पूर्वोपदर्शितदिशा सुधीभिस्स्वयमूहनीयः, यदि चैकत्वविशिष्टघटे भासमानं नीलवत् एकत्वे एकत्वत्वे च भासते, एवं नीलं नीलत्वञ्चेति भवति कल्पनैकपरायणानाम्मतिस्तदा तथाभानोपनिपातिन्योऽपि विषयता उक्तदिशा स्वयमाकलनीयाः। इदमत्रानुसन्धेयम्। यत्परम्परायाः संसर्गत्वमनुमतं, तत्र परम्पराघटकप्रथमपदार्थस्य प्रकारप्रतियोगिकत्वं, तद्घटकचरमपदार्थस्य विशेष्यानुयोगिकत्वं, न त्वेकस्य कस्यचित् प्रकारप्रतियोगिकत्वविशेष्यानुयोगिकत्वे, एवं च सति सम्बन्धत्वव्यापकविशेषणप्रतियोगिकत्वविशेष्यानुयोगिकत्वोभयनिवृत्त्या व्याप्यं सम्बन्धत्वमपि निवर्त्तत इति ज्ञानाकल्पितं वस्तुभूतं सम्बन्धत्वं तत्र नास्ति, अथापि संसर्गविधया परम्पराया भानमिति पदार्थद्वयघटिते परम्परास्वरूपे विषयतानिरूपितविषयतारूपा पदार्थत्रयघटिते परम्परास्वरूपे विषयतानिरूपितविषयतानिरूपितविषयतारूपा पदार्थचतुष्टयादिघटिते परम्परास्वरूपे विषयतानिरूपितविषयतानिरूपितविषयतानिरूपितविषयतादिरूपैव संसर्गता कल्पनीया भवति, तत्र प्रथमा विषयता प्रकारतानिरूपिता चरमविषयतानिरूपिका विशेष्यता भवतीति परम्परागतसंसर्गता प्रकारतानिरूपितनिरूपितत्वतः प्रकारतानिरूपितत्वं विशेष्यतायाश्च साक्षान्निरूकत्वमाश्रित्य प्रकारत्वविशेष्यत्वयोर्मध्य एव सन्निविष्टा भवति, अथ वा विशेष्यतायाः परम्परानिरूपितत्वं प्रकारतायाश्च साक्षान्निरूपकत्वमवलम्ब्य विशेष्यत्वप्रकारत्वयोर्मध्ये सा निविशते, यदि च निरूपितनिरूपिते निरूपितत्वं नास्ति निरूपकनिरूपके च निरूपकत्वं नास्ति तदा प्रकारतानिरूपितविषयतानिरूपितविषयतात्वादिनैव तादृशसंसर्गताप्रवेशः, परम्परासम्बन्धभानानुरोधेनैव च सम्बन्धानवच्छिन्नाया अपि विशेष्यतायास्संसर्गतानिरूपितत्वं स्वीक्रियते, न च परम्परासंसर्गकबुद्धिनिरूपितविशेष्यताया एव संसर्गतानिरूतत्वं न तु साक्षात्संसर्गकबुद्धिनिरूपितविशेष्यताया इति तस्या एव सम्बन्धानवच्छिन्नत्वं न तु परम्परासंसर्गकबुद्धिनिरूपितविशेष्यताया इति तस्यास्सम्बन्धावच्छिन्नत्वमपि स्वीक्रियत इति वाच्यम्, भूतले संयोगेन घटो नास्तीतिनिश्चयप्रतिबद्ध्यताया अवच्छेदकत्वस्य संयोगनिष्ठसंसर्गतानिरूपितघटनिष्ठप्रकारतानिरूपितभूतलनिष्ठविशेष्यताकबुद्धित्वस्याभ्युपगमे तस्य संयोगेन घटवद्भूतलमितिबुद्धाविव स्वसंयोगिसंयोगेन घटवद्भूतलमितिबुद्धावपि सत्त्वेन तस्या अपि तादृशनिश्चयप्रतिबद्ध्यत्वं स्यादतो घटनिष्ठप्रकारतानिरूपितसंयोगनिष्ठसंसर्गतानिरूपितभूतलनिष्ठविशेष्यताकबुद्धित्वस्यैव तादृशनिश्चयप्रतिबद्ध्यतावच्छेदकत्वं वाच्यं, तथा च साक्षात्संसर्गकबुद्धेः प्रतिबद्ध्यत्वानुरोधेन तन्निरूपितविशेष्यताया अपि संसर्गतानिरूपितत्वमावश्यकम्, तथाच

परम्परासंसर्गता नानाविषयता तदवच्छेदकताऽपि नाना, तन्निरूपितसंसर्गताऽपि चेति, यदि च परम्परायास्सप्रतियोगिकपदार्थघटितत्वे यत्प्रतियोगिकपदार्थघटितत्वं तत्प्रतियोगिकत्वं परम्परास्वरूपस्यापि, एवं यदनुयोगिकपदार्थघटितत्वन्तदनुयोगिकत्वमपि, तदाऽस्तु एकैव परम्परासंसर्गता, तस्याश्च प्रकारतानिरूपकत्वेनापि निवेशे त्वत्यभावाद्विशेष्यतानिरूपकत्वन्नाङ्गीकरणीयम्, स्वसंयोगिसंयोगनिष्ठसंसर्गता न संयोगत्वमात्रावच्छिन्नेति नोक्तदोषोऽपि, संयोगत्वमात्रावच्छिन्नत्वञ्च संयोगत्वातिरिक्तव्यावर्त्तकधर्मानवच्छिन्नत्वे सति संयोगत्वावच्छिन्नत्वं, तेनाऽव्यावर्त्तकधर्मविशेषितसंयोगादिसंसर्गकबुद्धेरपि संग्रहः। एवञ्च सति विशेष्यतायास्सम्बन्धानवच्छिन्नत्वमसङ्कुचितमेव निर्वहति, प्रतिबद्ध्यप्रतिबन्धकभावानुरोधेन प्रतिनियतसम्बन्धावच्छिन्नत्वस्वीकारस्यावश्यकत्वे प्रकारत्वविशेष्यत्वयोरन्यतरस्मिन् तत्स्वीकारेणाप्युपपत्तौ नोभयत्रापि तत्स्वीकारः सफलः, तत्र विशेष्यत्वे सम्बन्धावच्छिन्नत्वस्वीकारे तस्यैव सम्बन्धावच्छिन्नत्वेन प्रवेशनीयत्वेन एकत्र द्वयमितिरीत्या जायमाने पर्वतः संयोगेन वह्निमान् समवायेन रूपवानितिज्ञाने वह्निनिष्ठप्रकारतारूपनिष्ठप्रकारताद्वयनिरूपितसंयोगसम्बन्धावच्छिन्नसमवायसम्बन्धावच्छिन्नपर्वतनिष्ठैकविशेष्यताके, पर्वते समवायेन वह्निर्नास्तीतिनिश्चयनिरूपितप्रतिबद्ध्यतावच्छेदकवह्नित्वावच्छिन्नप्रकारतानिरूपितसमवायसम्बन्धावच्छिन्नपर्वतत्वावच्छिन्नविशेष्यताकबुद्धित्वसत्त्वात्तन्निश्चयप्रतिबद्ध्यत्वं स्यादतः प्रकारतायाः सम्बन्धावच्छिन्नत्वस्वीकार एव कान्तः, यत्तु कैश्चित् संयोगेन घटोऽवृत्तिरितिबुद्धिम्प्रति संयोगेन घटप्रकारकनिश्चयमात्रस्य प्रतिबन्धकत्वं, तथा च संयोगेन घटवद्भूतलं, संयोगेन घटवान् पर्वतः, संयोगेन घटवान् पट इत्यादिनिश्चयानां संयोगसम्बन्धावच्छिन्नघटत्वावच्छिन्नप्रकारतानिरूपकनिश्चयत्वेनैकरूपेणैकमेव प्रतिबन्धकत्वं प्रकारतायास्सम्बन्धावच्छिन्नत्वाभ्युपगमे निर्वहति, विशेष्यतायास्सम्बन्धावच्छिन्नत्वाभ्युपगमे तु संयोगेन घटवद्भूतलमितिनिश्चयस्य घटत्वावच्छिन्नप्रकारतानिरूपितसंयोगसम्बन्धावच्छिन्नभूतलत्वावच्छिन्नविशेष्यताकनिश्चयत्वेन प्रतिबन्धकत्वं, संयोगेन घटवान्पर्वत इतिनिश्चयस्य घटत्वावच्छिन्नप्रकारतानिरूपितसंयोगसम्बन्धावच्छिन्नपर्वतत्वावच्छिन्नविशेष्यताकनिश्चयत्वेन प्रतिबन्धकत्वमेवं संयोगेन घटवान्पट इत्यादिनिश्चयानामपीतिगौरवं स्फुटमेव, यदि च घटत्वावच्छिन्नप्रकारतानिरूपितसंयोगसम्बन्धावच्छिन्नविशेष्यताकनिश्चयत्वेन प्रतिबन्धकत्वमेकमेव, संयोगेन घटवानितिनिर्धर्मितावच्छेदककनिश्चयस्यापि घटत्वावच्छिन्नप्रकारतानिरूपितसंयोगसम्बन्धावच्छिन्ननिरवच्छिन्नविशेष्यताकनिश्चयत्ववत्त्वेनोक्तप्रतिबन्धकत्वं निर्वहतीतिविभाव्यते,

तदापि विशेष्यतानिवेशप्रयुक्तगौरवमत्र स्फुटमेवेति धूलीप्रक्षेपेण मुग्धानां ध्यान्ध्यं क्रियते, तदतितुच्छम्, यतो घटे संयोगेन न किञ्चिद्वर्त्तत इतिबुद्धिम्प्रति संयोगेन पटवान् घटः संयोगेन वह्निमान् घटः संयोगेन धूमवान् घट इत्यादिनिश्चयानां प्रतिबन्धकत्वमनुभवसिद्धं, तत्र विशेष्यतायाः सम्बन्धावच्छिन्नत्वे संयोगसम्बन्धावच्छिन्नघटत्वावच्छिन्नविशेष्यताकनिश्चयत्वेन सर्वेषामुक्तनिश्चयानामेकमेव प्रतिबन्धकत्वं, प्रकारताया एव सम्बन्धावच्छिन्नत्वे तु घटत्वावच्छिन्नविशेष्यतानिरूपितसंयोगसम्बन्धावच्छिन्नपटत्वावच्छिन्नप्रकारताकनिश्चयत्वादिना प्रतिबन्धकत्वे प्रतिबन्धकताबाहुल्यनिबन्धनं गौरवम्, अत्रापि घटत्वावच्छिन्नविशेष्यतानिरूपितसंयोगसम्बन्धावच्छिन्नप्रकारताकनिश्चयत्वेन प्रतिबन्धकत्वमित्युपगमे प्रकारताया अवच्छेदकविधया प्रवेशतो गौरवं स्फुटमेवेति तुल्यमेवेति विभावनीयं सुधीभिः। न चानन्तराभासमानसमानाधिकरणैकज्ञानीयविषयत्वयोरभेदस्यैव जगदीशसम्मतत्वेन गदाधरस्य तत्रावच्छेद्यावच्छेदकभावाभ्युपगमो न कान्त इति तन्मतावलम्बनेनोपदर्शितस्त्रितलावच्छेदकतावादो न मानार्ह इति वाच्यं, रक्तरूपवद्दण्डवान् पुरुष इतिबुद्धिं प्रति दण्डाभाववद्रूपमिति निश्चयस्य प्रतिबन्धकत्वापत्त्या जगदीशमतस्यायुक्तत्वेन गदाधरमतस्यैवाभ्युपगमार्हत्वात्, तथाहि दण्डाभाववद्रूपमितिनिश्चयस्य प्रतिबध्यतावच्छेदकं दण्डत्वावच्छिन्नप्रकारतानिरूपितरूपत्वावच्छिन्नविशेष्यतानिरूपकबुद्धित्वं तत् जगदीशमते रक्तरूपवद्दण्डवानिति बुद्धौ वर्त्तते यतस्तत्र दण्डस्य प्रकारतया दण्डे प्रकारता वर्त्तते, रक्तरूपस्य दण्डे प्रकारतया दण्डे विशेष्यताऽपि वर्त्तते तयोश्चाभेदः, दण्डे प्रकारतया रूपे प्रकारता वर्त्तते रूपे रक्तत्वस्य प्रकारतया रूपे विशेष्यताऽपि वर्त्तते, तयोश्चाभेद इति रूपे या प्रकारता सा दण्डनिष्ठविशेष्यतानिरूपितेति तदभिन्नत्वाद्रूपनिष्ठविशेष्यतापि दण्डनिष्ठविशेष्यत्वाभिन्नदण्डनिष्ठप्रकारतानिरूपितेति, अवच्छेद्यावच्छेदकभावे च रूपनिष्ठप्रकारत्वरूपनिष्ठविशेष्यत्वयोर्दण्डनिष्ठप्रकारत्वदण्डनिष्ठविशेष्यत्वयोश्च भिन्नत्वान्नोक्तदोषप्रसङ्ग इति। इदम्पुनरिहावधेयम्, ज्ञानविषययोस्सम्बन्धतया विषयविषयिभावः कल्प्यते, तस्य विषयतारूपत्ववद्विषयितारूपत्वमपि वक्तुं शक्यते, सम्बन्धिद्वयसम्बद्धस्यैव सम्बन्धत्वमितिनियमे यथा विषये स्वरूपेण ज्ञाने निरूपकतया सम्बद्धस्य विषयत्वस्य सम्बन्धत्वं तथा विषये निरूपकतया ज्ञाने स्वरूपेण सम्बद्धस्य विषयित्वस्यापि सम्बन्धत्वं सम्भवति, न च ज्ञानविषययोर्विषयत्वमेव सम्बन्धः, विषयित्वञ्च विषयतानिरूपकत्वमेव न तु तद्व्यतिरिक्तमिति वाच्यं विषयित्वमेव ज्ञानविषययोः सम्बन्धस्तन्निरूपकत्वमेव विषयत्वमित्यस्यापि वक्तुं शक्यत्वात्। अतो विषयतावद्विषयित्वमपि स्वीकर्त्तव्यमेव, व्यवस्थापितञ्च युक्तिनिकुरुम्बेणाऽस्मद्गुरुभिः

सुगृहीतनामधेयैः सर्वतन्त्रस्वतन्त्रैः श्रीमद्भिर्धर्मदत्तोपाध्यायैः सामान्यनिरुक्तिविवेच-
नायां गूढार्थतत्त्वालोकाख्यायाम्। एवञ्च यद्विषयत्वयोर्निरूप्यनिरूपकभावस्तद्विषयित्व-
योरवच्छेद्यावच्छेदकभाव इतिनियमेन नीलो घट इतिज्ञानगतानां विषयित्वानाम्मध्ये
येषां विषयित्वानां यैर्विषयित्वैस्सममवच्छेद्यावच्छेदकभावस्तेषां तथा सन्निवेशनेनेत्थ-
मपि नीलो घट इतिबोधस्वरूपं त्रितलावच्छेदकतावगमायोपवर्णयितुं शक्यते, तथाहि,
स्वरूपनिरूपितसंसर्गित्वाख्यविषयित्वावच्छेद्यसमवायत्वनिरूपितावच्छेदकिताख्यविष-
यित्वावच्छेद्यसमवायनिरूपितसंसर्गिताख्यविषयिताऽवच्छेद्यनीलत्वनिरूपितावच्छेदकि-
त्वावच्छेद्या या स्वरूपनिरूपितसंसर्गित्वावच्छेद्यसमवायत्वनिरूपितावच्छेदकितावच्छे-
द्यसमवायनिरूपितसंसर्गित्वावच्छेद्यनीलनिरूपितावच्छेदकिता तदवच्छेद्या स्वरूपनिरू-
पितसंसर्गित्वावच्छेद्यतादात्म्यत्वनिरूपितावच्छेदकितावच्छेद्यतादात्म्यनिरूपितसंसर्गि-
त्वावच्छेद्या नीलवन्निरूपितप्रकारिता तदवच्छेद्या स्वरूपनिरूपितसंसर्गित्वावच्छेद्यस-
मवायत्वनिरूपितावच्छेदकितावच्छेद्यसमवायनिरूपितसंसर्गितावच्छेद्यघटत्वनिरूपिता-
वच्छेदकितावच्छेद्या घटनिरूपितविशेष्यिता तद्वान् नीलो घट इतिबोधो भवति, तस्य
चेत्थमाकारः सम्पद्यते—स्वरूपनिरूपितसंसर्गित्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकत्वनिष्ठा-
वच्छेदकत्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकतानिरूपितसमवायत्वनिरू-
पितावच्छेदकितानिष्ठावच्छेदकत्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकत्व-
निष्ठावच्छेदकतानिरूपितसमवायनिरूपितसंसर्गित्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकत्व-
निष्ठावच्छेदकत्वनिष्ठावच्छेदकतानिरूपितनीलत्वनिरूपितावच्छेदकित्वनिष्ठावच्छेदक-
त्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकतानिरूपिता स्वरूपनिरूपितसंसर्गित्वनिष्ठावच्छेदक-
त्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकतानिरूपितसमवा-
यत्वनिरूपितावच्छेदकित्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकत्वनिष्ठाव-
च्छेदकतानिरूपितसमवायनिरूपितसंसर्गित्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकत्वनिष्ठाव-
च्छेदकतानिरूपिता नीलनिरूपितावच्छेदकित्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकता तन्नि-
रूपिता स्वरूपनिरूपितसंसर्गित्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकत्वनि-
ष्ठावच्छेदकतानिरूपिततादात्म्यत्वनिरूपितावच्छेदकित्वनिष्ठावच्छेदकत्वनिष्ठावच्छेद-
कत्वनिष्ठावच्छेदकतानिरूपिततादात्म्यनिरूपितसंसर्गित्वनिष्ठावच्छेदकत्वनिष्ठावच्छेद-
कतानिरूपिता नीलवन्निरूपितप्रकारित्वनिष्ठावच्छेदकता तन्निरूपिता स्वरूपनिरूपित-
संसर्गित्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकतानिरूपित-
समवायत्वनिरूपितावच्छेदकित्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकतानि-

रूपितसमवायनिरूपितसंसर्गित्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकतानिरूपितघटत्वनिरूपितावच्छेदकित्वनिष्ठावच्छेदकतानिरूपिता घटनिरूपितविशेष्यता तद्वान् नीलो घट इतिबोधः। यावत्यश्च नीलो घट इति बोधनिरूपिता विषयतास्तावत्यस्तद्बोधगतास्तादृशविषयतानिरूपिता विषयिता इति यावन्तो बोधप्रकाराः प्रत्येकं तत्तद्विषयतां प्रधानीकृत्य प्रथममुपवर्णितास्तावन्तस्तत्तद्विषयिताप्राधान्याश्रयणेन तदाश्रयत्वेन बोधविवक्षया बोधोपदर्शनप्रकारास्सम्भवन्ति, यथा चैकज्ञाननिरूपितानां समानाधिकरणानामनन्तराभासमानानां विषयत्वानामवच्छेद्यावच्छेदकभावस्तथैकविषयनिरूपितानामेकबोधगतानामुक्तावच्छेद्यावच्छेदकभावापन्नविषयतानिरूपितानां विषयित्वानामप्यवच्छेद्यावच्छेदकभावः। इयाँस्तु विशेषः, यदत्र स्वनिरूपकविषयतानिरूपितविषयतानिरूपितविषयितयाऽप्यवच्छेद्यावच्छेदकभावः, न चेयं स्वमनीषा, यतोऽस्मद्गुरुवर्यैस्सर्वतन्त्रस्वतन्त्रैः श्रीमद्भिस्सामान्यनिरुक्तिगूढार्थतत्त्वालोके "परस्परनिरूप्यनिरूपकभावाङ्गीकारेऽवच्छेदकतानिरूपितावच्छेदकतानिष्ठनिरवच्छिन्नत्वं यथा स्वनिरूपितत्वस्वभिन्नावच्छेदकतानिरूपितत्वोभयसम्बन्धेनावच्छेदकताविशिष्टान्यत्वं तथा तन्निरूपितविषयितानिष्ठमवच्छेदकनिरूपितविलक्षणविषयितया स्वावच्छेद्यत्वस्वाभिन्नावच्छेद्यत्वोभयसम्बन्धेन विशिष्टं यत्तदन्यत्वं तद्वाच्यम्" इत्येवं प्रथमं प्रदर्श्य अनन्तरं "वस्तुतो विषयतानिष्ठं विशेष्यत्वानवच्छिन्नत्वमिव विषयितानिष्ठं विशेष्यित्वानवच्छिन्नत्वमेव तद्विवक्षित"मित्यभिहितम्, तदनन्तरमुक्तलक्षणस्य विशेष्यतावच्छेदकनिरूपितविषयितायां निरवच्छिन्नायामव्याप्तिमाकलय्य "अस्तु वा विशेष्यतावच्छेदकनिरूपितविषयित्वे विशेष्यत्वानवच्छिन्नावच्छेदकतानिरूपितत्वमेव निरवच्छिन्नत्वकार्यकारी"त्यभिहितम्, तादृशग्रन्थपर्यालोचनयाऽवधार्यते यदुतैकविषयनिरूपितविषयित्वानामप्यवच्छेद्यावच्छेदकभावः, अन्यथा यद्विषयत्वयोर्निरूप्यनिरूपकभावस्तन्निरूपितविषयित्वयोरेवावच्छेद्यावच्छेदकभावे नीलत्वनिष्ठावच्छेदकतानिरूपिताऽवच्छेदकिताख्यविषयितायामिवनीलत्वनिष्ठावच्छेदकतानिरूपितनीलनिष्ठावच्छेदकतानिरूपितावच्छेदकिताख्यविषयतायामपि निरवच्छिन्नत्वं स्यात्, नीलनिष्ठावच्छेदकतायाः कयाचिदपि विशेष्यतया अनिरूपितत्वेन तन्निरूपिताऽवच्छेदकितायां विशेषितानवच्छिन्नत्वात्, नीलनिष्ठप्रकारताया निरवच्छिन्ननीलवन्निष्ठविशेष्यतानिरूपितत्वेऽपि ततो नीलनिरूपितप्रकारिताया एव नीलवन्निरूपितविशेष्यितयाऽवच्छिन्नत्वात्, एकविषयनिरूपितविषयित्वानामवच्छेद्यावच्छेदकभावे तु नीलत्वनिष्ठप्रकारतानिरूपितनिरवच्छिन्ननीलनिष्ठविशेष्यतानिरूपितविशेष्यितया नीलनिष्ठावच्छेदकतानिरूपितावच्छेदकिताया अवच्छिन्नत्वात् न निर-

वच्छिन्नत्वप्रसङ्गः, संशये निरूप्यनिरूपकभावानापन्नकोटिद्वयप्रकारतानिरूपितप्रकारि-
त्वयोरवच्छेद्यावच्छेदकभावस्वीकारेण निरूप्यनिरूपकभावापन्नविषयताद्वयनिरूपित-
विषयित्वयोरेवावच्छेद्यावच्छेदकभाव इति :नियमस्य कल्पयितुमशक्यत्वाच्च, एवञ्च
नीलो घट इत्यादौ पूर्वोक्तदिशा विषयतावद्विषयित्वस्यापि द्विनवतिसंख्यकत्वस्य
विंशोत्तरशतसंख्यकत्वस्य चतुरशीत्युत्तरशतसंख्यकत्वस्य च व्यवस्थितौ तत्र द्विनवति-
संख्यकविषयित्वावलम्बनेन बोधोपदर्शनप्रकारे निर्वक्तव्ये एकविषयनिरूपितानां विषयि-
त्वानां यावतामवच्छेद्यावच्छेदकभावस्तत्र प्रथमस्याऽवच्छेदकत्वमेव स्वनिरूपकनिरूपित-
विषयित्वस्य, चरमस्य च स्वनिरूपकनिरूपितविषयित्वस्यावच्छेद्यत्वमेव, तथा चरमाया
एव स्वनिरूपकविषयतानिरूपकविषयतानिरूपितविषयिताया अन्यविषयनिरूपिताया
अवच्छेद्यत्वमेकस्य चैकविषयनिरूपितविषयित्वस्यैकेनैव स्वनिरूपकनिरूपितविषयित्वे-
नावच्छेद्यत्वमेकस्यैव च स्वनिरूपकनिरूपितविषयित्वस्यावच्छेदकत्वमित्येवं समाश्रित्य
विषयत्वसमाश्रयणेन बोधप्रकारोल्लेखे यत्र यन्निष्ठयादृशविषयित्वावच्छेद्यविषयत्वावच्छे-
द्यत्वादिप्रकारेणोल्लेखस्तत्र तन्निरूपिततादृशविषयित्वावच्छेद्यविषयित्वावच्छेद्येत्यादिप्र-
कारेणोल्लेखं पुरतःकृत्वा विषयिताश्रयतया नीलो घट इति बोधस्य यथोपदर्शनं सम्यक्-
त्वमञ्चति तथोपवर्ण्यते। तथाहि, स्वरूपनिरूपितसंसर्गित्वनिष्ठावच्छेदकत्वनिष्ठावच्छे-
दकत्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकत्वनिष्ठावच्छेद -
कत्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदक-
तानिरूपित-स्वरूपनिरूपितसंसर्गित्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदक-
त्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकत्व-
निष्ठावच्छेदकत्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकतानिरूपितस्वरूपनिरूपितसंसर्गित्वनि-
ष्ठावच्छेदकत्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकत्वनिष्ठा-
वच्छेदकत्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकतानिरूपि-
तस्वरूपनिरूपितसंसर्गित्वनिष्ठावच्छेदकत्वनिष्ठावच्छेकदत्वनिष्ठावच्छेदकत्वनिष्ठाव-
च्छेदकत्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकत्वनिष्ठाव-
च्छेदकतानिरूपितस्वरूपनिरूपितसंसर्गित्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकत्वानिष्ठावच्छे-
दकत्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकत्वनिष्ठावच्छे-
दकतानिरूपितस्वरूपनिरूपितसंसर्गित्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकत्वनिष्ठावच्छेद-
कत्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकतानिरूपितस्वरूप-
निरूपितसंसर्गित्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकत्व-

निष्ठावच्छेदकत्वनिष्ठावच्छेदकतानिरूपितसमवायत्वनिरूपितविशेषणित्वनिष्ठावच्छेद-
कत्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदक-
त्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकता-
निरूपितसमवायत्वनिरूपितावच्छेदकित्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकत्वनिष्ठावच्छे-
दकत्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकत्वनिष्ठावच्छेद-
कत्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकतानिरूपितसमवायत्वनिरूपितावच्छेदकित्वनिष्ठाव-
च्छेदकत्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकत्वनिष्ठाव-
च्छेदकत्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकतानिरूपितसमवायत्वनिरू-
पितावच्छेदकित्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकत्व-
निष्ठावच्छेदकत्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकतानिरूपितसमवायत्व-
निरूपितावच्छेदकित्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकत्वनिष्ठावच्छेद-
कत्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकतानिरूपितसमवायत्वनिरूपिताव-
च्छेदकित्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकत्वनिष्ठाव-
च्छेदकत्वनिष्ठावच्छेदकतानिरूपितसमवायत्वनिरूपितावच्छेदकित्वनिष्ठावच्छेदकत्व-
निष्ठावच्छेदकत्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकतानिरूपितसमवायनि-
रूपितविशेष्यित्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकत्वनि-
ष्ठावच्छेदकत्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकत्वनिष्ठा-
वच्छेदकतानिरूपितसमवायनिरूपितसंसर्गित्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकत्वनिष्ठा-
वच्छेदकत्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकत्वनिष्ठाव-
च्छेदकत्वनिष्ठावच्छेदकतानिरूपितसमवायनिरूपितसंसर्गित्वनिष्ठावच्छेदकत्वनिष्ठाव-
च्छेदकत्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकत्वनिष्ठाव-
च्छेदकत्वनिष्ठावच्छेदकतानिरूपितसमवायनिरूपितसंसर्गित्वनिष्ठावच्छेदकत्वनिष्ठाव-
च्छेदकत्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकत्वनिष्ठाव-
च्छेदकतानिरूपितसमवायनिरूपितसंसर्गित्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकत्वनिष्ठाव-
च्छेदकत्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकतानिरूपितसमवायनिरूपित-
संसर्गित्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकत्वनिष्ठाव-
च्छेदकतानिरूपितसमवायनिरूपितसंसर्गित्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकत्वनिष्ठाव-
च्छेदकत्वनिष्ठावच्छेदकतानिरूपितनीलत्वनिरूपितप्रकारित्वनिष्ठावच्छेदकत्वनिष्ठाव-
च्छेदकत्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकत्वनिष्ठाव -

च्छेदकत्वनिष्ठावच्छेदकतानिरूपितनीलत्वनिरूपितावच्छेदकित्वनिष्ठावच्छेदकत्वनिष्ठा-
वच्छेदकत्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकत्वनिष्ठाव-
च्छेदकतानिरूपितनीलत्वनिरूपितावच्छेदकित्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकत्वांनष्ठा-
वच्छेदकत्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकःत्वनिष्ठावच्छेदकतानिरूपितनीलत्वनिरूपि-
तावच्छेदकित्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकत्वनि-
ष्ठावच्छेदकतानिरूपितनीलत्वनिरूपितावच्छेदकित्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकत्व-
निष्ठावच्छेदकत्वनिष्ठावच्छेदकतानिरूपितनीलत्वनिरूपितावच्छेदकित्वनिष्ठावच्छे-
दकत्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकतानिरूपिता या स्वरूपनिरूपितसंसर्गित्वनिष्ठाव-
च्छेदकत्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकत्वनिष्ठाव-
च्छेदकत्वनिष्ठावच्छेदकःत्वनिष्ठावच्छेदकतानिरूपितस्वरूपनिरूपितसंसर्गित्वनिष्ठाव-
च्छेदकत्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकत्वनिष्ठाव-
च्छेदकत्वनिष्ठावच्छेदकतानिरूपितस्वरूपनिरूपितसंसर्गित्वनिष्ठावच्छेदकत्वनिष्ठावच्छे-
दकत्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकतानिरूपितस्वरू-
पनिरूपितसंसर्गित्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकत्व-
निष्ठावच्छेदकतानिरूपितसमवायत्वनिरूपितविशेषणित्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदक-
त्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकता-
निरूपितसमवायत्वनिरूपितावच्छेदकित्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकत्वनिष्ठावच्छेद-
कत्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकतानिरूपितसमवायत्वनिरूपिताव-
च्छेदकित्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकत्वनिष्ठावच्छे-
दकतानिरूपितसमवायत्वनिरूपितावच्छेदकित्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकत्वनि-
ष्ठावच्छेदकत्वनिष्ठावच्छेदकतानिरूपितसमवायनिरूपितविशेष्यित्वनिष्ठावच्छेदकःत्वनि-
ष्ठावच्छेदकत्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकःत्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकतानिरू-
पितसमवायनिरूपितसंसर्गित्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकत्वनिष्ठा-
वच्छेदकत्वनिष्ठावच्छेदकतानिरूपितसमवायनिरूपितसंसर्गित्वनिष्ठावच्छेदकत्वनिष्ठा-
वच्छेदकत्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकतानिरूपितसमवायनिरूपितसंसर्गित्वनिष्ठा-
वच्छेदत्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकतानिरूपिता स्वरूपनिरूपितसंसर्गित्वनिष्ठाव-
च्छेदकत्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकत्वनिष्ठाव-
च्छेदकत्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकत्वनिष्ठावच्छेद कत्वनिष्ठावच्छेदकत्वनिष्ठाव-
च्छेदकत्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकतानिरूपितस्वरूपनिरूपितसंसर्गित्वनिष्ठावच्छे-

दकत्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकत्वनिष्ठावच्छेद-
कत्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदक-
त्वनिष्ठावच्छेदकतानिरूपितस्वाश्रयाभिन्नवृत्तित्वत्वनिरूपितविशेषणित्वनिष्ठावच्छेदक-
त्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकत्व-
निष्ठावच्छेदकत्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकता-
निरूपितस्वाश्रयाभिन्नवृत्तित्वत्वनिरूपितावच्छेदकित्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदक-
त्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकत्व-
निष्ठावच्छेदकत्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकतानिरूपितस्वाश्रयाभिन्नवृत्तित्वनिरूपि-
तविशेष्यित्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकत्वनिष्ठाव-
च्छेदकत्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकतानिरूपित-
स्वाश्रयाभिन्नवृत्तित्वनिरूपितसंसर्गित्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदक -
त्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकता-
तिरूपितनीलनिरूपितप्रकारित्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकत्बनिष्ठावच्छेदकत्वनिष्ठा-
वच्छेदकत्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकतानिरूपितं यत् स्वरूपनिरू-
पितसंसर्गित्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकत्वनिष्ठा -
वच्छेदकत्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकत्वनिष्ठाव -
च्छेदकत्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकतानिरूपितस्वरूपनिरूपितसंसर्गित्वनिष्ठावच्छे-
दकत्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकत्वनिष्ठावच्छेद -
कत्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदक -
तानिरूपितस्वाश्रयतादात्म्यत्वनिरूपितविशेषणित्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकत्वनि-
ष्ठावच्छेदकत्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकत्वनिष्ठा-
वच्छेदकत्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकतानिरूपितस्वाश्रयतादात्म्यत्वनिरूपितावच्छे-
दकित्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकत्वनिष्ठावच्छेद-
कत्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकतानिरूपितस्वाश्रय-
तादात्म्यनिरूपितविशेष्यित्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकत्वनिष्ठाव -
च्छेदकत्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकतानिरूपित-
स्वाश्रयतादात्म्यनिरूपितसंसर्गित्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकत्वनि-
ष्ठावच्छेदकत्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकतानिरूपितनीलनिरूपित-
प्रकारित्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकत्वनिष्ठावच्छे-

दकत्वनिष्ठावच्छेदकत्वं तन्निरूपितनीलनिरूपितविशेष्यित्वनिष्ठावच्छेदकत्वनिष्ठाव-
च्छेदकत्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकतानिरूपितनीलनिरूपितप्रका-
रित्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकतानिरूपितनील-
निरूपितावच्छेदकित्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकतानिरूपिता
नीलनिरूपितावच्छेदकित्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकता तन्निरूपिता स्वरूपनिरू-
पितसंसर्गित्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकत्वनिष्ठा-
वच्छेदकत्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकतानिरूपितस्वरूपनिरूपितसंसर्गित्वनिष्ठाव-
च्छेदकत्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकत्वनिष्ठावच्छे-
दकतानिरूपिततादात्म्यत्वनिरूपितविशेषणित्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकत्वनिष्ठा-
वच्छेदकत्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकतानिरूपिततादात्म्यत्वनिरूपितावच्छेदकित्व-
निष्ठावच्छेदकत्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकतानिरूपिततादात्म्य-
निरूपितविशेष्यित्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकतानिरूपिततादा-
त्म्यनिरूपितसंसर्गित्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकतानिरूपिता नीलवन्निरूपितविशे-
ष्यित्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकतानिरूपितस्वरूपनिरूपितसंस-
र्गित्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकत्वनिष्ठावच्छेद-
कत्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकतानिरूपितस्वरूपनिरूपितसंसर्गि-
त्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकत्व-
निष्ठावच्छेदकत्वनिष्ठावच्छेदकतानिरूपितस्वाभिन्नवृत्तित्ववत्वनिरूपितविशेषणित्वनि-
ष्ठावच्छेदकत्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकत्वनिष्ठा-
वच्छेदकतानिरूपितस्वाभिन्नवृत्तित्ववत्वनिरूपितावच्छेदकित्वनिष्ठावच्छेदकत्वनिष्ठाव-
च्छेदकत्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकतानिरूपितस्वाभिन्नवृत्तित्व-
निरूपितविशेष्यित्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकता-
निरूपितस्वाभिन्नवृत्तित्वनिरूपितसंसर्गित्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकत्वनिष्ठावच्छे-
दकतानिरूपितनीलवन्निरूपितप्रकारित्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकतानिरूपिता नी-
लवन्निरूपितप्रकारित्वनिष्ठावच्छेदकता तन्निरूपिता घटनिरूपितविशेष्यित्वनिष्ठावच्छे-
दकत्वनिष्ठावच्छेदकतानिरूपितघटनिरूपितविशेष्यित्वनिष्ठावच्छेदकतानिरूपिता स्वरू-
पनिरूपितसंसर्गित्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकत्वनिष्ठावच्छेद-
कत्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकतानिरूपितस्वरूपनिरूपितसंस-
र्गित्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकत्वनिष्ठाव-

च्छेदकत्वनिष्ठावच्छेदकतानिरूपितस्वरूपनिरूपितसंसर्गित्वनिष्ठावच्छेदकत्वनिष्ठावच्छे-
दकत्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकतानिरूपितस्वरूपनिरूपितसंसर्गि-
त्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकतानिरूपितसमवाय-
त्वनिरूपितविशेषणित्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकत्वनिष्ठावच्छेद-
कत्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकतानिरूपितसमवायत्वनिरूपितावच्छेदकित्वनिष्ठा-
वच्छेदकत्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकतानिरू-
पितसमवायत्वनिरूपितावच्छेदकित्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकत्व-
निष्ठावच्छेदकतानिरूपितसमवायत्वनिरूपितावच्छेदकित्वनिष्ठावच्छेदकत्वनिष्ठावच्छे-
दकत्वनिष्ठावच्छेदकतानिरूपितसमवायनिरूपितविशेष्यित्वनिष्ठावच्छेदकत्वनिष्ठावच्छे-
दकत्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकतानिरूपितसमवायनिरूपितसंस-
र्गित्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकतानिरूपितसमवा-
यनिरूपितसंसर्गित्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकतानिरूपितसमवाय-
निरूपितसंसर्गित्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकतानिरूपितं यत् घटत्वनिरूपितविशेष्यि-
त्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकत्वनिष्ठाच्छेदकत्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकता-
निरूपितघटत्वनिरूपितविशेष्यित्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकत्व-
निष्ठावच्छेदकतानिरूपितघटत्वनिरूपितावच्छेदकित्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकत्व-
निष्ठावच्छेदकतानिरूपितघटत्वनिरूपितप्रकारित्वनिष्ठावच्छेदकत्वनिष्ठावच्छेदकता-
निरूपितं घटत्वनिरूपितावच्छेदकित्वनिष्ठावच्छेदकत्वं तन्निरूपिता घटनिरूपितविशे-
ष्यिता तद्वान् नीलो घट इति बोधः। इति दिक्।

❀    

अवच्छेदकतोल्लेखे गीतिश्चतुस्तलादीनाम् ।
एवमपि वह्नौ युक्त-स्त्रितलयाऽऽद्यया वादः ॥१॥

कार्यकारणबोधानां त्रयाणां विषयत्वतः ।
केचिदज्ञानमाहात्म्यात् त्रितलां तां प्रचक्षते ॥२॥

कथमेवमितिप्रश्ने गूढ़क्रीलादिभाषया ।
समाधानं प्रकुर्वन्ति मन्दबुद्ध्याहतक्रमाः ॥३॥

एतदुल्लेखमात्रेण ज्ञानदृष्ट्यपमानिताः ।
तद्ग्रन्थे गुरुमाहात्म्यं पूत्कुर्वन्त्यनुधाविताः ॥४॥

अतस्तत्त्वावबोधार्थं तेषामपि सुयुक्तितः ।
वादोऽयं रचितश्छात्रवर्गे साफल्यमञ्चतु ॥५॥

यस्यां मुक्तिः स्वसिद्धौ जनकपरिचयं सङ्गता स्वात्मभावात्
धर्मावस्थानसिद्धिः कलिभयविकला यत्र तीर्थौघशक्तेः ॥
या चोत्कर्षं नितान्तं कलयति सकलाभीष्टशास्त्रार्थचर्चा
देशानामग्रगण्या महितजनकजापाविता तीरमुक्तिः ॥६॥

तस्यां धर्मैकलीनो गुणगणनिलयो भूसुरो भूपवर्यो
विद्या सर्वाऽनवद्याऽसमनिजविभवं भूसुरेष्वादधाति ॥
धर्मोऽखण्डस्वरूपोऽवति सततमरं भूसुरान् रक्षितस्तैः
विप्रास्सर्वे कुलीनाः कलिमलविकलाः शक्तिसेवाप्रवीणाः ॥७॥

येषां स्वान्ते दरीभे श्रवणमननजध्यानयोगप्रभावे
विक्षेपाक्षेपमुक्ता वसति विवसनो योगिगम्या हरोऽपि ॥
यद्व्याप्त्या व्यापकत्वं कलयति भुवने काश्यपत्वं सुगोत्रे
ते विप्राग्र्या महान्तो जगति दरिहरा काश्यपास्सुप्रतीताः ॥८॥

झोपाह्वो भट्टनामाऽजनि मतिनिलयाद्वाभनात्तत्र वंशे
मीमांसातत्त्ववेत्ता गुरुगुरुरपरः कालिकालीनचित्तः ॥
दैवज्ञस्तस्य पुत्रो भगणमतिरथारूढ़ एवासमन्तात्
नक्षत्राणां विचारे फलवति भरथीत्याख्यया सुप्रसिद्धः ॥९॥

इन्द्रस्वाचार्ययुक्तो निजयजनसमाचारसञ्चारवृद्ध्यै
एकात्मीभूय तस्मादजनि हरिलसञ्जीवनामा बुधेन्द्रः ॥
तत्पुत्रोऽनल्पपुत्रोऽन्वयविततलतारोहिणी यस्य कीर्त्ति-
र्विख्याता रोहिणीशादपि धवलतरा रोहिणीसंज्ञकस्सः ॥१०॥
शीदत्तस्तस्य पुत्रो द्विजवरमिथिलाधीशसम्प्राप्तवृत्ती
राँटीग्रामेष्टवासोऽमितसुतविभवोल्लासजातप्रकर्षः ॥
पुत्रस्तस्य ब्रजेतिप्रथमपदलसन्नाथनामा गुणाढ्यो
ज्योतिर्विद्याप्रवीणो हरिरिव परमाधानशक्तिप्रभावः ॥११॥
तत्पुत्रो धर्मनिष्ठो गृहमणिरतुलो योगमण्यग्रजन्मा
श्रीमान्धीमान् वदान्यो महति निजकुले सत्यसन्धाग्रगण्यः ॥
दैवज्ञस्तस्य हीरामणिरमितमतिः पुत्ररत्नो नयज्ञो
भूदेवाद्राजवर्याद्बुधसदसि नुतो लब्धधौतप्रतिष्ठः ॥१२॥
त्रयःपुत्रास्तस्य प्रकृतिसुभगा नीतिनिपुणा
उमानाथो ज्यायान् परहितरतो दातृप्रवरः ॥
गुणग्रामारामो भवभजनसंजातविभवोऽ-
नुजस्तस्यारक्तो जगति शशिनाथो भवरतः ॥१३॥
तस्यानुजो विविधनीतिवचःप्रचार-
व्याख्यानदाननिपुणो नृपलब्धवृत्तिः ॥
श्रीश्यामसुन्दर उपार्जितशब्दविद्यः
कालीक्रमाब्जयुगलीनमनोमिलिन्दः ॥१४॥
धीशक्त्या मध्यमेनाणुमपि कलयता सर्वतन्त्रस्वतन्त्रात्
झोपाह्वाद्धर्मदत्ताद्गुरुकविगणपोक्तीश्वरीशक्तिमूर्त्तेः ॥
दृब्धोऽवच्छेदकत्वे त्रिमुखबहुतलत्वादिबोधाय वादः
खेन्द्वाकाशाक्षि(२०१०)संवत्समयप्रकटितो मोददः स्याद्बुधानाम् ॥१५॥

इति, मिथिलासंस्कृतविद्यापीठमलङ्कुर्वता राँटीग्रामवास्तव्येन झोपाह्वशशिनाथेन कृतः
त्रितलावच्छेदकतावादः ॥

—::❀::—